# अथ प्राभञ्जनोत्तरभागः प्रारभ्यते ।



ॐ श्रीः ॥ पूर्वभागे शुद्धाद्वैतमार्तण्डे केनचिद्दोषदूषितप्रज्ञादृष्टिनोद्भाविता दोषाभासा निरस्तास्तदुक्तयश्च दूषिताः। द्वितीयभागे विद्वन्मण्डनस्य पंचाशत्खण्डान्कल्पयित्वा तदर्थाज्ञानात्तेन कल्पिता ये खण्डनाभासास्तेषु क्रमेणाभासत्वं प्रदर्श्यते ॥ तत्र प्रथमं श्लोकत्रयात्मकं विद्वन्मण्डनस्य प्रथमं खण्डं प्रकल्प्य तत्खण्डनाभासं चिकीर्षुरीर्ष्याविवश आदौ निंदात्मकश्लोकौ रचितवान्, यद्यप्यस्माभिरपि तन्निन्दापरास्सहस्रशः श्लोका रचयितुं शक्यंते तथापि निंदा निंदकस्यैव निंदां द्योतयतीति प्रसिद्धिरतस्तस्यैव तस्य निंदितत्वसिद्धेः, सिद्ध इच्छाविरहाच्च न तदर्थं यत्न: क्रियते ॥ परनिंदात्मसंस्तुत्यादीनां धर्मशास्त्रे निषिद्धत्वाच्च। यान् हीत्यादिना कथंचित् गद्यमुक्त्वा (नास्मिन्मंत्रादिरीतिरस्ति न चेदं मंत्रशास्त्रादिषूपलभ्यत) इति यदुक्तं तदपि शास्त्राज्ञानादेव, भगवच्छरणागतेर्मोक्षहेतुत्वस्य सर्वत्र प्रतिपादनात्। उक्तं गोपालतापनीये "यो ब्रह्माणं विदधाति पूर्वं यो विद्यास्तस्मै गोपायति कृष्णः। तं देवमात्मवृत्तिप्रकाशं मुमुक्षुर्वै शरणमनुव्रजे" दिति। भगवद्गीतायामपि 'दैवी ह्येषा गुणमयी मम माया दुरत्यया। मामेव ये प्रपद्यंते मायामेतां तरंति ते। पुनश्च 'तेषामहं समुद्धर्ता मृत्युसंसारसागरात्। भवामि न चिरात् पार्थ मय्यावेशितचेतसाम् ॥ अग्रे 'सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज। अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुच:' ॥ 'मन्मना भव मद्भक्तो मद्याजी मां नमस्कुर्वि'त्यादौ शरणागतेरेवोक्तत्वात् मंत्रग्रहणानंतरं च कर्तव्यबोधकं तंत्रसारे धृतं वचनं 'शरीरमर्थं प्राणांश्च पुनस्तस्मै निवेदयेत्। हितं तस्याचरेन्नित्यं मनोवाक्कायकर्मभि'रिति ॥ किंचेत्यादिना यदुक्तं तापादिकं कृष्णवियोगं प्रति हेतुत्वेऽपसिद्धांत ईश्वरेच्छाया एव सर्वत्र हेतुत्वोपगमादिति तन्न साधीय, ईश्वरेच्छैव सर्वत्रास्मन्मते कारणं परन्तु यया रीत्या यद्विषयिका सा भवति तथैव तदुत्पद्यते। अस्यैतावत्कालपर्यन्तं मद्विरहजनिततापानंतरं मत्प्राप्तिर्भवत्विति यदि क्रीडेच्छा जाता तदा सा लीला तथैव भवति, तथा च कालतद्वियोगादीनां न स्वतंत्रतया कारणत्वं किन्त्वीश्वरेच्छयैव, एवं च तेषां कारणत्वेपि नेश्वरेच्छायाः कारणत्वहानिर्हि तस्याः सर्वकारणत्वात्, अन्यथा त्वन्मतेपि दंडादीनां घटादिकं प्रति कारणत्वस्य त्वदीयैरुक्तत्वेन ब्रह्मणो जगत्कारणत्वहानिः स्यात्। प्रथमश्लोकस्य द्वितीयचरणेन (तदीयप्रथमश्लोकस्य दुरभिप्रायत्वं सूचित) मिति यदुक्तं तदुचितमेव दोषदूषितचित्तस्य। उक्तं च–'निजदोषावृतमनसामतिसुंदरमेव भाति विपरीतम्। पश्यति पित्तोपहतः शशिशुभ्रं शंखमपि

पीतम्' ॥ १ ॥ यत्तु ( आर्द्रार्द्रं इति प्रयोगश्चिन्त्यो द्वित्वे बहुव्रीहिवद्भावप्राप्त्या पूर्वभागे विभक्त्यभावायोगा ) दित्युक्तं तदप्यविचारितरमणीयं, भक्तैर्व्रजसुंदरीनिरुपमस्नेहविचित्रतरोर्मिभिरार्द्रार्द्रप्रभुरसदृशां विषयोस्तु इति वाक्यबोध्याशयबोधनार्थं, व्रजसुंदरीसंबद्ध इति वक्तव्ये तेषां व्रजसुंदरीनिरुपमेत्यादिभंग्या कथनं स्वविरहं व्यनक्ति ॥ तत्राप्यार्द्रार्द्र इति पदेनातिशयो व्यज्यते अतिस्नेहयुक्तप्रभुदर्शनस्याशास्यमानत्वात् । तथा च 'आबाधे चे'ति सूत्रेणैव द्वित्वं चकाराद्बहुव्रीहिवद्भावश्च, अत एव पूर्वपदे सुपो लुक्, तथा चोक्तं भाष्ये 'एकं बहुव्रीहिव'दिति सूत्रे अथ बहुव्रीहिवत्त्वे किं प्रयोजनम् ? सुब्लोपपुंवद्भावौ सुब्लोप एकैकं पुंवद्भावो गतगता इति । अतिशयेनार्द्र इत्यर्थाभिधानं तु व्यंग्यार्थमादायैव क्रियासमभिहारे चेति वार्तिकेन क्रियाया एवातिशये चोरये द्वित्वस्य विधानाद्, लोडंतस्यैव द्विर्वचनं लोटः समुच्चये विधानादिति कैयटोक्तरीत्या तस्यात्राप्रवृत्तेश्च । एवं चाग्रेपि युवतिं लक्षीकृत्य यः स्नेह इत्यादि यत् टीकाकृता व्याख्यातं तदपि व्यंग्यार्थमादायैव । प्रतिलक्षणेत्यस्य तु प्रतिलक्षणरूपार्थव्यञ्जक इत्यर्थः । अत एवाग्रे टीकायां न चेदं रूढ्या प्राप्यते नापि योगेन विशेषाणां बहुत्वात्, अतो व्यञ्जनयैवेति निश्चयः । व्यञ्जना च तात्पर्यवृत्तिरेव नत्वतिरिक्तेत्यादिव्यञ्जनाया वृत्तित्वं पूर्वप्रतिपादितस्य व्यंग्यार्थत्वं च व्यवस्थापितम् । समासस्तु प्रत्यर्थमितिवत् व्यापकत्वरूपे वाच्यार्थे संभवति । तथा च युवतिं युवतिं प्रति संभेदस्तत्रत्ययुवतित्वव्यापकसंभेद इति वाक्यार्थः । लक्षीकृत्येत्यादिकं व्यंग्यमिति न कोपि दोषः । अग्रे च यत्त्वित्यादिना टीकाकृदुक्तं किंचिदनूद्य तन्न युक्तमित्यादिना वक्ष्यमाणस्य तृतीयखण्डस्थस्य तथा सति प्रक्षालनादित्यस्य व्याख्याने वाचो मनश्च लौकिक्योऽशुद्धं चेति तच्छ्रुत्यर्थवर्णनपरस्त्रोकेर्विरोधादिति दोषापादनं तदपि तदभिप्रायाज्ञानादेव । निजमुरलिकेत्यादिश्लोके किमपि परितश्चार्द्रार्द्र इत्यस्य व्याख्याने किमपि अनिर्वचनीयं यथा स्यात्तथा प्रकटीभवन् प्रभुरसदृशां वृतिरूपज्ञानानां नेत्राणां वा विषयो गोचरोऽस्त्वित्युक्तम् । तत्रानिर्वाच्यता तु "यतो वाचो निवर्तंते अप्राप्य मनसा सहे"ति श्रुत्या ब्रह्मण्येव श्राविता, तस्यैव "आनंदं ब्रह्मणो विद्वान्न बिभेति कुतश्चन" इत्युपसंहार उक्तवान् । कथमेतादृशस्य श्रीकृष्णस्यानिर्वाच्यत्वमित्याशंका स्यादतस्तादृशशंकानिवृत्त्यर्थं टीकाकारेणानिर्वाच्यत्वं तु रसरूपस्यैव "रसो वै सः रसं ह्येवायं लब्ध्वानंदी भवती"त्यनेनोपक्रांतत्वात्, अत एवानंदादिपदं त्यक्त्वा रसपदमुपात्तम्, अत्र च यद्यपि 'यतो वाचो निवर्तंत' इत्यादिश्रुत्या वाङ्मनोगोचरत्वकथनात्, वाक्पदेन चेंद्रियगणस्य विवक्षितत्वात् सर्वेन्द्रियागोचरस्य सर्वेन्द्रियवृत्तिगोचरत्वस्यानुपपत्त्या इंद्रियैर्विषयाकृष्टैरिति न्यायेन भगवतोंतर्बहिरिंद्रियाकर्षेण या सर्वेन्द्रियवृत्तिगोचरता तस्या आशास्यत्वं व्यज्यत इत्यसंगतं, तथापि लौकिकवागादींद्रियाशुद्धमनसोऽगोचरत्वस्य श्रुत्या प्रतिपादनात्तावतैवानिर्वाच्यत्वस्यापि सिद्धौ भगवतोंतर्बहिरिंद्रियाकर्षेण या अलौकिकेन्द्रियवृत्तिगोचरता तस्या आशास्यमानत्वे विरोधाभावात् । एतदभिप्रायेणैवाग्रे वाचो मनश्च लौकिक्योऽशुद्धं चेत्यादिना तादृशश्रुतिर्व्याख्यातेति न विरोधः । अथवाग्रे जगत्कर्तृत्वादिविशिष्टनिर्विशेषयोर्भेदमंगीकरोष्युताभेदं, भेदपक्षे तात्त्विकमतात्त्विकं वा ? न तावदाद्य इत्यादिना युक्ति-

यलेन विचार आरब्धः। तत्र "सर्वत्र प्रसिद्धोपदेशा"दित्यादिना भेदपक्षं खंडयित्वा द्वितीयस्तु स्यान्न स्याद्विरोधादित्यादिना द्वितीयपक्षमंगीकृत्य तत्र पूर्ववद्विरोधाशंकायां युक्तिबलेनैवमेवमित्यादिना विरोधपरिहार आरब्धे श्रोतव्यत्वादीनां श्रुतिसिद्धानां वाङ्मनसागोचरत्वानामपि परस्परं विरोधपरिहारः युक्त्यैव कर्तव्य इत्यभिप्रायेण वाचो मनश्च लौकिक्योऽशुद्धं चेति टीकाकारेणोक्तम्। अधुना "सर्ववेदांतप्रत्ययं चोदनाद्यविशेषा"दिति सूत्रभाष्योक्तब्रह्मणोऽनंतरूपत्वेपि यानि यानि रूपाणि विविधैर्मीवैरुपासितुं शक्यानि तानि रूपाणि तैस्तैर्वेदान्तैर्निरूप्यंत इत्यादिरीत्या रसरूपस्यानिर्वाच्यत्वमीश्वरादिरूपस्येंद्रियादिविषयत्वं च प्रतिपादितम्। तावद्रूपात्मकमेकमेव ब्रह्मेति सिद्धांतः प्रकटीकृतः टीकाकारैः। ननु यथा द्रव्यदेवताभेदाद्यागभेदस्तथाऽनिर्वाच्यत्वनिर्वाच्यत्वादीनां भेदाद्ब्रह्मभेदः कुतो न स्यादिति चेन्न, सर्वेषु वेदांतेषु एकेन ब्रह्मत्वेनैव रूपेण "ब्रह्मैवोपासीत आत्मानमुपासीते"त्यादिनोपासनाया विहितत्वात्॥ तथा चायं प्रयोगः, ब्रह्म तदुपासनं च सर्ववेदांतप्रतीतं तत्तदुपासनावाक्येषु तत्तन्नानाधर्मवत्तया प्रतिपादनेपि न भिद्यते विद्याद्यविशेषात् यत्र चोदनाद्यविशेषस्तदनेकवाक्येषु तथा प्रतिपादनेपि न भिद्यते नानाशाखोक्तज्योतिष्टोमादिकर्मवत्। नच स्वरूपासिद्धिरिति वाच्यम्, अविशिष्टचोदनात्वस्यैव हेतुत्वात् तद्रूपत्वं च स्वश्रवणप्रयोज्यावृत्तिविषयत्वसबंधेनेति। ननु "ज्योतिष्टोमेन यजेत" "दर्शपौर्णमासाभ्यां स्वर्गकामो यजेते"त्यादौ यजेतेति वाक्यस्यैकत्वेपि द्रव्यदेवताभेदाद्यथा यागभेदस्तथा चोदनाविशेषेपि तत्तद्धर्मभेदात् कथं न धर्मिभेदस्तथा च ब्रह्म भिन्नं भिन्नधर्मवत्त्वादामिक्षायागवदित्यप्यनुमानं कथं न स्यादिति चेन्न। ब्रह्म धर्मभेदेपि न भिन्नं भिन्नधर्मवत्त्वस्यातिरात्रे व्यभिचारित्वेन स्वसाध्यासाधकत्वात्। अतिरात्रे द्विषोडशिग्रहणे अग्रहणे वा गृहीतषोडशिकेऽगृहीतषोडशिकापेक्षयाऽधिकगुणत्त्वेपि नातिरात्रं परस्परं भिद्यतेतिरात्रमधिकृत्यैव षोडशिग्रहणाग्रहणयोर्विहितत्वादेवमेवात्रापि ब्रह्मैवाधिकृत्य वागादिगोचरत्वतदगोचरत्वयोर्विहितत्वान्न ब्रह्मभेदः, किंतु विरुद्धधर्माश्रयं ब्रह्मस्वरूपमेकमेव धर्मिग्राहकमानेनैकस्यैव शुद्धस्यानंतरूपत्वेन सिद्धत्वात्। नन्वेवं विरुद्धधर्माश्रयस्यैकत्वं यद्यपि शब्दप्रमाणसिद्धं तथापि न युक्तिसिद्धं दृष्टांताभावादिति वाच्यम्, यथा एकस्यैवान्योन्याभावस्य घटप्रतियोगिकत्वपटप्रतियोगिकत्वादिविरुद्धधर्मभेदेपि न भेद एवं घटभेदनिष्ठघटाभावस्य घटत्वाभावघटभेदादीनां च विरुद्धधर्माश्रयत्वेपि न भेदस्तथात्रापि विरुद्धधर्माश्रयस्यैकत्वेपि न दोषः॥ वस्तुतस्त्वस्मन्मते युक्तेर्मुख्यता नास्ति "तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यविमोक्षप्रसंग" इत्यादिसूत्रेण तस्या निंदितत्वात्, किंतु ब्रह्मविचारे श्रुतिरेव प्रधानं "श्रुतेस्तु शब्दमूलत्वा" दित्युक्तेः। श्रुत्या तु विरुद्धधर्माश्रयत्वेनैव तत्प्रत्याय्यतेऽतस्तादृशमेव तदिति मंतव्यम्॥ एतदभिप्रायेणैवाग्रे चतुर्विंशतिखंडे तथाच श्रुतिरपि यथास्थितं ब्रह्म प्रतिपादयन्ती न पर्यनुयोगार्हा, विकृतत्वादिधर्माश्च लोके समवायिषु दृश्यंते तथा चोभयपक्षाये ब्रह्माविकृतमेव समवायीति लोके च तादृशमेव समवायित्वमिति व्यवस्था मंतव्या। ब्रह्म समवाय्यविकृत चेत्यपि गुडजिह्विका, वस्तुतस्तु विरुद्धधर्माश्रयम-

पीत्यादि प्रतिपादितम् ॥ एतेन ( चतुर्विंशतिसंदर्भविरोधाचे ) त्यादिकमपास्तं । तद्वाच्यस्याऽवाङ्मनोगोचरत्वमिति तु मम मुखे जिह्वा नास्तीति वाक्यवद् व्याहतम् ॥ रसशब्दार्थस्य ब्रह्मत्वे त्विष्टापत्तिः। ईश्वरस्य शक्त्यैवोपनिषदर्थसंभवे लक्षणाकल्पने मानाभावात् चेदे लक्षणाया अन्याय्यत्वाचेत्यादिदूषणगणग्रस्ततया "दानंदं ब्रह्मणो विद्वान्"त्यादिको न 'श्रुत्यादिविरोध' इत्यतो ग्रंथोऽसंगत । किंचेत्यादिना शृंगाररूपस्यानंदरूपाद्ब्रह्मणो भिन्नत्वे सामानाधिकरण्यानुपपत्तिरिति यदुक्तं तदपि पूर्वोक्त्यैव निरस्तम् ॥ रसरूपस्यानंदरूपस्य ब्रह्मत्वेन भेदाभावात् ॥ किंच त्वन्मते जीवब्रह्मणोर्भेदाभावात् । "रसं ह्येवायं लब्ध्वानंदी भवती"ति श्रुतिरसंगता ॥ अपि च जीवपक्षे त्वन्मत एवकारासंगतिः, जीवस्य विषयसुखेनाप्यानंदित्वात् ॥ यत्तु किंचेत्यादिना तद्रूपेण भेदांगीकारेऽपि नात्र तस्याऽवाङ्मानसगोचरता प्रतीयते किंत्वानंदरूपस्यैव प्रकरणाद्वाक्यस्य बलीयस्त्वादित्युक्तं, तन्न, प्रकरणाद्वाक्यस्य बलीयस्त्वं तत्र भवति यत्रैकवाक्यत्वनिश्चयः । यथा "इंद्राग्नी इदं हविरजुषेतामवीवृधेतां महोज्यायोक्राता" मित्यत्रेंद्राग्नीपदस्य "यदाग्नेयोष्टाकपालोमावास्यायां ऐंद्रं दध्यममावास्याया" मित्यादिना विहितानामिंद्राग्निदेवताकयागीयदेवोपस्थितिजनकत्वेन दर्शांगत्वे सिद्धे इदं हविरित्यादेरपि तदेकवाक्यत्वनिश्चयाद्दर्शांगत्वमेव नतु प्रकरणाद्दर्शपौर्णमासांगत्वं, न च प्रकृते तथास्ति एकवाक्यत्वनिश्चयाभावात्, प्रत्युत रसो वै सः इत्यत्र तच्छब्दश्रवणात् यतो वाच इत्यत्र यच्छब्दश्रवणात् यतो वागादयो निवर्तन्ते स रस इति वाक्यार्थो जायते यत्तदोर्नित्यसंबंधात्, प्रत्यक्षं तत्पद लक्षत्वाऽध्याहारकल्पने मानाभावात् तेनैवैकवाक्यत्वनिश्चयात् प्रकरणाच्च तस्यैवानिर्वाच्यत्वं नरवानंदमित्यादिनोक्तस्येति ॥ किंचेत्यादिना यदुक्तं तत्तु भेदानंगीकारेणैव परास्तम् ॥ ननु रसस्य रसादिशब्दे व्यवहार्यत्वादज्ञातस्य चापुरुषार्थत्वात् कथं तस्यावाङ्मनोगोचरत्वमिति चेत्तस्य रसादिशब्दात् प्रतीतत्वेपि ईदृशं तदिति साक्षात्तस्य स्वमवेद्यत्वादेवानिर्वाच्यत्वोपपत्तेः॥ यदि च तच्छब्दवाच्यत्वमेवानिर्वाच्यत्वहानिकरमिति त्वत्संमतं तदा मायाया अपि मायाशब्दवाच्यत्वेन तस्या अप्यनिर्वचनीयत्वं न स्यात्, रूपादेर्विशेषस्यापि यदि वागाद्यगोचरत्वं त्वया स्वीकृतं चेत्तदा त्वन्मत आनदरूपब्रह्मण एव तदगोचरत्वकथने कथं न न्यूनता वैयर्थ्यं कथं नेत्यपि विभावनीयम् । वस्तुतोऽणुरूपादेर्विशेषस्य नीलत्वपीतत्वादिव्यवहारगोचरत्वं प्रत्यक्षादिप्रमाणप्रतीतमनिवार्यमेव ॥ रसरूपस्य त्वनिर्वाच्यत्वं श्रुत्यैव प्रतिपादितम् ॥ एतेन ( अथ सामान्येन तद्गोचरत्वेपि विशेषेण तदगोचरे ) त्यादिकमपास्तं, मनसाप्यगम्यस्य यदि पुरुषार्थत्वं न स्यात्तर्हि ब्रह्मणोपि त्वन्मते वागाद्यगोचरत्वात्तस्यापि पुरुषार्थत्वानुपपत्तिः ॥ ब्रह्मभावस्यैव त्वन्मते परमपुरुषार्थत्वेनेष्टापत्तेः कर्तुमशक्यत्वात् ॥ "यन्मनसा न मनुते" 'दृश्यते त्वग्र्यया बुद्ध्या' 'कश्चिद्धीरः प्रत्यगात्मानमैक्ष'' दित्यादिश्रुतीनां विरुद्धधर्माश्रयत्वेन ब्रह्मप्रतिपादकत्वेनैवोपपत्तौ प्रमाणगतविशेषाश्रयत्वेन व्यवस्थायां मानाभावात् ॥ प्रमेयस्वरूपस्यैव तादृशत्वेन दोषाभावात् ॥ एवं च प्रमाणगतविशेषेणेत्यादिकमसंगतमेव ॥ यदपि यत्त्वित्यादि टीकाकारोक्तस्नेहो भक्तिरित्युक्तमित्यादिकमनूद्य तदप्ययुक्तमित्यादिना स्नेहस्येच्छाया भिन्नत्वांगीकारे कामादेरपि तथात्वापत्तेरित्यादिना दोषापादनं, तदपि न

किंचित्। जिज्ञामीत्याद्यनुव्यवसायसिद्धाया इच्छात्वभिन्नाया ज्ञानत्वविलक्षणाया स्नेहत्व जातेस्तदाश्रयस्य स्नेहस्य च पृथक्कारास्मिप्रेतत्वात्॥ ननु स्नेहस्य ज्ञानमेवैतज्ज्ञानुव्यवसाय तथा चानुव्यवसायपदार्थाज्ञानादेवैतत्कथनमिति चेन्नातोरि,न्यायमते आत्मविशेषगुणानां ज्ञानादीनां ज्ञानमेवानुव्यवसाय , अत एव जानामीत्याकारकज्ञानादीनामनुव्यवसाय ॥ त्वदीयानां मतेपि वृत्तिविशेषरूपाणां ज्ञानसुखादीनां च साक्षिणा प्रकाश स एवानु व्यवसायस्तथा च तवैवानुव्यवसायपदार्थाज्ञानमूलक प्रलाप ॥ नच स्नेहस्येच्छाभिन्नत्वे कामभिन्नत्वापत्ति कामशब्दस्येच्छार्थककर्मनिष्पन्नत्वादिति वाच्यम्, यदि तद्वदस्तदर्थक धातुनिष्पन्नशब्दार्थभेदव्याप्य स्यात्तदेयमापत्ति स्यात्। स एव च न सम्भवति सत्ताभिन्न- स्यापि द्रव्यगुणादे सत्तार्थकभूधातुनिष्पन्नभावशब्दार्थभिन्नत्वाभावात्। क्रीडाभिन्नस्यापि दाशरथ्यादेस्तदर्थकधातुनिष्पन्नरामशब्दार्थभिन्नत्वाभावात्तत्र तत्र व्यभिचारेण तादृश व्याप्तौ मानाभावेनेच्छाभिन्नस्यापि स्नेहस्य कामभिन्नत्वे मानाभावेन “समुद्र इव काम नास्तोऽन्तिकामस्य नसमुद्रस्ये ’ति श्रुत्या स्नेहस्याबोधितत्वत्वप्रतिपादनेन तस्यानन्तत्वप्रदर्शने विरोधाभावात ॥ यच्च यद्वेत्यादिना टीकाकृदुक्त “वशास्तु भगवान् रुद्र ” ‘ वेद शिव शिवो वेद” इति तापिन्यादिवचनेन मुरलिकाया वेदात्मकत्वमनूद्य तद्युक्तमित्यादिना समानशब्दवाच्यानामभेदे हरिश्चन्द्रेर्केतिकोशाच्चन्द्रसूर्ययोरैक्यापत्तिरूपो दोष उद्भावित , सोप्यस्थान एव, नहि कोशवत्तापनीयादौ तत्तच्छब्दवाच्यत्व प्रतिपाद्यते किन्त्वभेदोऽभेद भावना वा, उभयथापि वेदात्मकशब्दाभिन्नमुरलिकाया वेदात्मकत्व तत्त्वेन प्रतीतिर्वा न विरुद्धा ॥ विद्वद्भिरित्यादिना स्वीयस्य निंदात्मकस्य श्लोकस्य व्याख्या सापि निंदा, तेन स्वस्य निंदितत्व व्यक्तीकृत तत्र च पुष्टिमार्गो व्यामोहनायेत्युक्तम् ॥ पुष्टिमार्गस्तु भक्तिमार्ग स च ‘भक्त्याहमेकया ग्राह्य’ इत्यादिना स्वय श्रीकृष्णोक्त एव, तस्यापि व्यामोहकत्व चेत्तर्हि तदुक्तानां सन्यासादीनां व्यामोहकत्व कुतो न स्याद्विनिगमनाविरहस्य तुल्यत्वात्॥ किंच ते पुष्टिमार्ग तु स्थिता त्व तु कुत्रापि न स्थितोसि, न ज्ञानमार्गे नापि कर्ममार्गे किंतूभयभ्रष्ट एवासि तस्मादयुक्तमेव गालिप्रदानादिक, तत्र तु मौनमेवोत्तरम् ॥ आसीत् कश्चिदित्यादिना यदुक्त तदप्यात्मवन्मन्यते जगदिति प्रवादानुसारादेव ॥ अधिक तु नोच्यते, शिष्टसम्प्रदाया भावात्। यत्तु नेनोक्त विठ्ठलेति नाम चक्रे तदज्ञानात्, विठ्ठलेति नापूर्वं नाम किंतु दाक्षिणात्ये जनपदे विद्यानगरे श्रीविठ्ठलेति नाम्ना प्रसिद्धा प्राचीना भगवत पुरुषोत्तमस्य मूर्ति सा चाद्यापि प्रसिद्धतरा वैष्णवै शिष्टै पूज्यते च, तस्मिन्नगर एव अनर्घ्यरत्नखचितमेखलया श्रीवल्लभाचार्यै श्रीविठ्ठलाख्यभगवन्त पूजिता स्वप्ने निजस्वरूप दर्शयित्वा श्रीवल्लभार व्यान् श्रीविष्णुस्वामिमार्गमुपदिष्टवत । तस्माद्देवाश्रित नाम कुर्यादिति प्रसिद्धे स्वपुत्रस्य तदाश्रितं नाम कृतवन्तस्तस्यैव भगवत पुरुषोत्तमस्य नाम्नो निरुक्तिरिय विदा ठा शून्या विठ्ठान्त् लाति आदत्ते विठ्ठल इति ॥ तत्र यदि स देवानां प्रिय इति वदेत् अत्र तृतीया न सम्भवति तदा प्रष्टव्य कि विधायकाभावात्तृतीया न सम्भवति वा प्रतिबन्धकस्य कस्य चिद्विद्यमानत्वात्। नाद्यस्तस्यात्रादर्शनात्। नापि द्वितीय ‘प्रकृत्यादिभ्य उपसङ्ख्यान’मिति वार्तिकस्यैव विधायकस्य विद्यमानत्वात् यथा धनेन शून्यो विधुरो रहित इत्यादि, तद्वदत्रापि

तृतीयायां बाधकाभावात्, अत एव शब्दशक्तिप्रकाशिकायां घटेन शून्य इत्याद्युदाहृत्य घटत्वावच्छिन्नं प्रतियोगित्वमेव शून्यत्वान्वयि तृतीयार्थं इत्युक्तम्॥ नच पदार्थः पदार्थेनान्वेति नतु पदार्थैकदेशेनेति व्युत्पत्तेः शब्दार्थाभावविशिष्टैकदेशेऽभावे कथं तृतीयार्थान्वय इति वाच्यम्, संपन्नो व्रीहिरित्यत्रानेकव्रीहितात्पर्यके पद एकवचनार्थस्यैकत्वस्य व्रीहिपदार्थेषु नानाव्रीहिष्वन्वयासंभवेन पदार्थतावच्छेदकव्रीहित्व एव तदन्वयस्य वक्तव्यतया तादृशव्युत्पत्तिसंकोचस्यावश्यकत्वात्। शरैः शातितपत्रोऽयं दासभार्य इत्यादौ शरकरणत्वचैत्रनिरूपितत्वादीनां पदार्थैकदेशशातनस्वत्वाद्यन्वयदर्शनेन ससंबंधिकार्थबोधकपदभिन्नपदार्थैकदेश एव पदार्थांतरान्वयबोधकस्याव्युत्पन्नत्वनिश्चयाच्च॥ किंचेत्यादिनाऽस्यंतज्ञानाभावस्य शिलादिष्वेव सत्वेन विठ्ठलशब्देन पारमार्थिकज्ञानाभाववानित्याद्युक्त्वा यदुक्तं तदपि न साधीयः। 'ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः' 'नहि ज्ञानेन सदृशं पवित्रमिह विद्यते' 'ज्ञानी त्वात्मैव मे मतमि'त्यादिभगवद्वाक्येषु ज्ञानपदस्य पारमार्थिकज्ञानपरत्वस्यापि दर्शनेन ज्ञानपदस्य तदर्थे शक्तेर्निरूढलक्षणाया वा स्वीकर्तव्यतया पारमार्थिकज्ञानत्वस्याप्यन्वयितावच्छेदकत्वसंभवेन तद्धर्मावच्छिन्नाभावबोधे बाधकाभावात्। सह सुपेति समासस्य भाष्यसंमतत्वेन तत्र क्लेशाभिधानेऽन्यसूत्रविहितसमासस्यापि क्लिष्टता कुतो न स्यात् विनिगमकाभावस्य तुल्यत्वात्। तादृशसमासानां क्लिष्टत्वे योगविभागस्य वैयर्थ्यापत्तेः। विदो दकारस्य ठकारस्तु पृषोदरादित्वात्। न च तस्य पृषोदरादित्वे किं मानमिति वाच्यम्। शिष्टोच्चारितत्वस्यैव प्रमाणत्वात्। दाक्षिणात्ये जनपदे सर्वैः शिष्टैस्तस्य भगवतो विठ्ठलेति संज्ञा व्यवह्रियते। शिष्टाचारस्यापि श्रुत्यादिवत् प्रमाणत्वात् श्रुत्याद्यनुमापकत्वाच्च। नच तत्तद्देशीयशिष्टानां य आचारस्तस्य च तद्देशीयशिष्टविषयकत्वेनैव प्रामाण्यं कल्पनीयं नतु सर्वसाधारणमिति कथं तस्य निरंकुशं प्रामाण्यमिति वाच्यम्, त्तत्तदाचारेण कल्प्यमानस्य वेदस्य सर्वसाधारणप्रामाण्यस्यैव जैमिनिना पूर्वकांडे प्रतिपादनात्, अत एव "अनुव्यवस्थानात्तत्स्युक्तं प्रमाणं स्या" दिति सूत्रे होलिकादिशिष्टाचाराणां स्मृतिविशेषाणां चानुष्ठातृपुरुषभेदेन व्यवस्थितं प्रामाण्यं, कुतः? देशविशेषे तेषां दृष्टत्वात्। होलिकादयः प्राच्यैरेव क्रियंते वसंतोत्सव आह्नीनीवकादयो दाक्षिणात्यैः। स्वस्वकुलागतकरंजार्कादिस्थावरपूजा देवतापूजादिकमाह्नीनीवकशब्देन व्यवह्रियते। उद्वृषभादय उदीच्ये, ज्येष्ठमासस्य पौर्णमास्यां बलीवर्दानभ्यर्च्य धावयंति सोयमुद्वृषभयज्ञः। एवं हारीतादिस्मृतिरपि क्वचित् क्वचिद्देशविशेषे दृश्यते तस्माद्व्यवस्थितं प्रामाण्यमिति पूर्वपक्षे तन्मूलत्वेनानुमितस्य वेदस्य सर्वसाधारणत्वेन सर्वसाधारणत्वादिति भट्टैरुक्तं तत्रैव प्राच्यादिपदयुक्तायाः श्रुतेरनुमितौ यदि अर्थाचोद्येदमात्वं(?)चेन्न सामान्यानुमानत इति प्रभाकरैरप्युक्तं प्राच्यादिभिर्व्यवस्थाया होलिकादिष्वनुष्ठीयमानेषु तन्मूलभूता श्रुतिरपि तादृश्येव प्राच्यादिपदयुक्त्यनुमातव्या। तत्र प्राच्यादिपदस्यार्थबोधकत्वं न संभवति, प्राच्यां किंचित्कालं निवसमानानामपि प्रतीच्यां वासदर्शनादतस्तादृशश्रुतेरप्रामाण्यमिति चेन्न तत्पदरहिताया एव श्रुतेः कल्पनीयत्वेन तस्य सार्वत्रिकमेव प्रामाण्यमिति तदर्थः॥ तस्माच्छिष्टाचारानुमितश्रुतेः प्रमाणत्वात् विठ्ठलशब्दस्य गूढात्मेत्यादिशब्दवत्पृषोदरादित्वा-

स्प्रामाण्यं साधुत्वापरपर्यायमविरुद्धम् ॥ एतेन (लोके देवविशेषे तादृशप्रयोगस्तु कनैयादि-शब्दवज्ज्ञेय) इति प्रलपितमपास्तं, कनैयादिशब्दानामपभ्रंशत्वेनैव शिष्टव्यवहाराविषयत्वं नतु स्तोत्रादिषु तेन शब्देन व्यवहारो, विठ्ठलशब्दस्य स्वस्मिपुराणादिषु प्रयोगो दृश्यत इति दृष्टांतवैषम्यात्साधुविठ्ठलशब्दः साधुरेवेति संक्षेपः ॥ इति प्रथमखंडखंडनाभासस्याभासत्वप्रदर्शनम् ॥ अथ द्वितीयखंडखंडनाभासस्याभासत्वं प्रदर्श्यते ॥ तत्रादौ निखिलजनापवर्गाय श्रवणादयो विधीयंत इत्युक्त्वा मुक्तेरप्यधिकं भक्तियोगमीश्वरो ददाति भक्तेभ्य इति स्वसिद्धान्तविरुद्धमिति दोष आपादितः, स तु तत्समभिव्याहृतविविधवृजिनतापोपतप्यमानेत्याकारकविशेषणमनवलोक्यैव, भक्तानां तादृशतापतप्यमानत्वाभावादेव वारणसंभवेन सिद्धांतविरोधशंकाया एवाभावात् । न च निखिलपदं व्यर्थत्वादनुपादेयमिति वाच्यम्, तथा सति श्रवणादीनां तादृशसकलजनसाधारणापवर्गसाधनत्वानिश्चयेन जिज्ञासूनां निरंकुशप्रवृत्तिस्तत्र न स्यात् ॥ यत्तु ( श्रवणादीनां निखिलजनापवर्गार्थत्वमपशूद्राधिकरणविरुद्ध )मित्युक्तं तदपि तुच्छम् । तथा सति यागस्य स्वर्गकामस्वर्गार्थत्वमपि तदधिकरणविरुद्धं स्यात् ॥ तत्रापि स्वर्गकामो यजेतेत्यादिश्रुत्या यागस्य निखिलस्वर्गकामस्वर्गार्थत्वं षष्ठेध्याये प्रपंचितं, शूद्रस्यापि स्वर्गकामः संभवत्येव, यागानधिकारस्तु "श्रवणाध्ययनार्थप्रतिषेधा" दित्यादि सूत्रेण तस्मिन्नेवाधिकरणे प्रतिपादितः । "अथास्य वेदं शृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रपूरण" मित्यादिना श्रवणस्यैव निषेधाद्यागाधिकारस्य दूरत एवापास्तत्वात् । यदि च "अथातो धर्मजिज्ञासे" ति सूत्रोक्तस्वाध्यायाध्ययनस्य सर्वयागसहकारित्वन्यायेनाधीतस्वाध्यायस्यैव स्वर्गकामस्य तत्पदेन ग्रहणमत एव "फलार्थत्वात् कर्मणः शास्त्रं सर्वाधिकारं स्या" दिति सूत्रे अंधपंगुबधिरमूकादीनामपि स्वर्गकामसंभवेन तेषामप्यधिकारमाशंक्याशक्तस्य नास्त्यधिकार इत्यादि प्रपंचितमित्युच्यते तदात्रापि विविदिषेत्यादिवाक्येनापि शूद्रादिभिन्नोऽधीतवेदो मुमुक्षुरेव प्रतिपाद्यते ॥ श्रवणादय इत्यत्रादिपदेन पुराणादीनामपि ग्रहणे तु दोष एव न संभवति ॥ यत्तु ( पूर्वपक्षे नहि श्रुतिसिद्धा इति यत्पूर्वं प्रतिज्ञातं ततो विरुद्धमग्रे श्रौतानामपीत्यादि कथनं तत्र पूर्वप्रतिज्ञाऽसंगते ) इत्युक्तं तदसत् । पूर्वापरग्रंथानवलोकनेनोक्तत्वात्, नहि सिद्धांतिन इयं प्रतिज्ञा किंतु पूर्वपक्षिण एव । तथाहि पूर्वं निर्विशेषं ब्रह्म सविशेषं वेति विप्रतिपत्तौ निर्विशेषमेवेति वादिना प्रतिज्ञातम्, तत्साधकतया च निर्विशेषप्रतिपादकश्रुतीनां सविशेषश्रुत्युपजीव्यत्वं तद्बाधे चोपजीव्यविरोधो हेतुत्वेनोपन्यस्तः, अस्थूलादिवाक्यैर्धर्मनिषेधात्तिर्धर्मकमेव पर्यवस्यतीत्युक्तम् । तत्र सिद्धांतिना नन्वित्यादिना यदि अस्थूलादिवाक्यैः स्थौल्यादिनिषेधपुरःसरं निर्विशेषं निरूप्यते चेत्तदा निषेधस्य प्रतियोगिनिरूपणाधीननिरूपणीयत्वान् प्रतियोगिनिरूपकश्रुतेरुपजीव्यत्वेन तद्बाधेप्युपजीव्यविरोधस्य तुल्यत्वात्तदनादरेण शून्यवाद आपतनीत्युक्तम् । तत्र वादी सिद्धांतिसंमतरीत्याह । नहि श्रुतिसिद्धा धर्मा निषिध्यंते किंत्वनुवादपूर्वं लौकिकाः स्थौल्यादय इत्यादिनोपजीव्यविरोधनिर्णये पुनर्दोष उद्भाविते स्वसंमतरीत्या तद्दोषनिरासार्थमुक्तवान् श्रौतानामप्यर्थानामिति । इतरथा पूर्वपक्षिमते सर्वत्र स्थौल्यादिधर्मप्रतिपादकश्रुतीनामनुवादकत्वान्नहि श्रुतिसिद्धा इत्यादिकथनमेवासंगतं

स्यात्। तस्मादज्ञानविजृम्भित एवाय प्रलाप । एवमग्रेपि श्यामत्वस्येवेत्यत्र पष्ठ्यनु पपन्नेत्यादिक शब्द प्रयुक्त इत्यतप्रथोऽप्युपेक्षणीय । जीमूतस्येवेत्यादिषु पष्ठ्या उप लभ्यमानत्वात्। यच्च सिद्धान्तग्रथारमे मिथ्यावादी ग्रन्थ्य इत्युक्ते रोष सोपि निरर्थक । नहि मिथ्यावादित्व भवत्सु नास्तीति वक्तु शक्यम्, अन्यथा ब्रह्मप्रमातिरिक्तबाध्यत्वे सति सत्त्वेन प्रतीत्यर्हं चिदिन्न मिथ्या न वेति विप्रतिपत्तौ सत्या विमत मिथ्या दृश्यत्वात् जडत्वात्परिच्छिन्नत्वादित्यादिहेतुभिर्मिथ्यात्वसाधनाग्रहो भवता किंमूलक ? नहि मिथ्येति पक्षपरिग्रह विना तादृशप्रतिज्ञाहेत्वादिप्रदर्शन कथकसप्रदायसिद्ध भवति। तथा च द्वयोर्वादिनोर्मध्ये य एव वदति विमत मिथ्यैवासौ मिथ्यावादीति लोक व्यवह्रियते। यदि च मिथ्यावादित्व भवता नाभिमत चेत्तर्हि विमत सत्य-मित्युक्त्वाऽस्मन्मतानुसरण कर्तव्यम्। तादृश पक्षस्त्यक्तव्य । ननु तथापि मिथ्या वादीति पदस्य निरुक्तिर्वक्तव्या कि सर्वं मिथ्या वदत्यसौ मिथ्यावादी वा यत्किंचिन्मिथ्या वदतीति वा इति चेदुच्यते। सर्वं मिथ्या वदतीति ताच्छील्ये णिनिप्रत्यय । नच ब्रह्मणो मिथ्यात्वानगीकारान्निरनुयोज्यानुयोग इति वाच्यम्, ब्रह्मणोपि त्वन्मते मिथ्यात्ववादत एव 'मायाख्याया कामधेनोर्वत्सौ जीवेश्वरावुभौ। तद्वद्ब्रह्मणो नापि जीव शक्तिकोशाविलक्षणा' इत्यादिनेश्वरस्यापि जीवसमत्व त्वदीये प्रतिपादितम्। जगत्कर्तृत्वा दिविशिष्टस्यापि मिथ्यात्व, किमधिकमखण्डाकारवृत्तिविषयस्यापि मिथ्यात्वमेव भवद्भि स्वीकृतमतो मिथ्यावादित्व सुस्थिरम्॥ यथा कदाचिदुष्ण भुञ्जानोपि नोष्णभोजीति प्रयोगस्तथा स्वप्नादिक मिथ्येति वदस्त्वस्मासु न मिथ्यावादीति प्रयोग । एव दैवात्कदा चिच्छीतमपि भुक्त चेत्तदाप्युष्णभोजिनो नोष्णभोजित्वहानिस्तथा किंचिन्निर्विशेष सत्यत्वेनाभ्युपगच्छतस्तव न मिथ्यावादित्वहानि । किंच श्रुतिस्मृतिषु सत्यत्वेन प्रतिपादि-तस्यार्थक्रियाकारिणो जगत सत्यस्य त्रैकालिकात्यन्ताभावप्रतियोगित्वाश्रयत्व वदत कुतो न मिथ्यावादित्वम्॥ यथा सतमेव घटमत्र घटो नास्तीत्यादिना ब्रुवन् मिथ्यावादीत्युच्यते। अपि च 'नाप्रतीतिस्तयोर्बाध किंतु मिथ्यात्वनिश्चय ।नो चेत्सुषुप्तिमूर्छादौ मुच्येतायत्नतो नर ' इत्यादिना मिथ्यात्वनिश्चयस्य तद्भावनाया अपि मोक्षसाधनत्वेन प्रतिपादनात् कथ मिथ्यावादीति कथनस्य गालिमात्रे पर्यवसायित्वमुक्तम्, नहि मोक्षसाधनसम्पन्नतया प्रतिपादन गालिप्रदान सभवति किंचासीत्कश्चिदित्यादिना यत्त्वया प्रलपित तदेव लोके गालिप्रदानत्वेन व्यवह्रियतऽतस्तवैव ददतु ददतु गालीरिति न्यायविषयत्वम्। एतेन न सारदाय इत्यादिक निरस्तम्। एव मायावादित्वमपि त्वयि सगच्छते, सर्वग्रथेषु सदसद्भ्या-मनिर्वचनीयभावरूपज्ञानसिद्धमित्यादिनातिनिर्बन्धेन तस्या एव प्रतिपादनात्पूर्वग्रथेपि मायाया एव प्रतिपादितत्वाज्जगत ईश्वरस्य च मायिकत्वेन वर्णनात् त्वदीयैरपि न निरूप-यितु शक्या प्रत्यक्ष भासते च या 'सा मायेतीन्द्रजालादौ लोका सम्प्रतिपेदिरे' इत्या दिना इन्द्रजालतुल्यत्व प्रतिपादितम्। 'निर्बन्धस्तत्त्वविद्याया इन्द्रजालत्वसस्मृतौ' इत्यादिना तत्त्वविद्याफलमपीन्द्रजालतया ज्ञानमेव दर्शितम् । एव च तादृशमायाप्रदर्शक यथा मायाविरत्र लोके व्यवह्रियते एव तादृशमायाप्रतिपादक मायावादित्वमपि लोकैर्व्यवह्रियत

इत्यत्र लोक एव नियामकः। नहि सामर्थ्ययुक्ते स्वसामर्थ्येन पर्वतोत्पाटनादिकार्यं कुर्वति हनूमदादौ येनचिन्मायावित्व व्यवहृत नापि तादृशशक्तिमनिपादके च मायावादिव्यवहार, एवमेवेश्वरस्य "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इत्यादिश्रुतिप्रतिपादितमायापदवाच्यशक्तिस्वीकर्तृष्वस्मासु न मायावादित्वव्यवहार ॥ यद्वा, तत्तत्पदार्थाकारविज्ञानापरपर्यायवृत्तिस्वीकारेऽपि त्वयि न विज्ञानवादित्वव्यवहार किंतु बौद्धेष्वेव, यथा वा शब्दज्ञानादीना क्षणिकत्वस्वीकर्तृषु नैयायिकेषु न क्षणिकवादित्वं किंतु सौत्रान्तिकादिष्वेव, तथैव तादृशशक्तिस्वीकारेऽपि नास्मासु मायावादित्व किंतु त्वय्येव। एतेन किंचेत्यादिकमपास्तम्। यत्तु (अस्माभिर्ब्रह्मातिरिक्तस्य सत्यत्वानङ्गीकारेण अस्मन्मते तस्यासत्कल्पत्वात् नहि तमो द्रव्य नास्तीति वदँस्तार्किकादिस्तमोवादीत्युच्यते अभावो नास्तीति वदन् प्राभाकरादिर्वा भाववादी) इत्याद्युक्त तन्मन्दम्, मायाया असत्त्वस्वीकारे तस्या जगद्धेतुत्वानुपपत्ति "कथमसतः सज्जायत" इत्यादि श्रुतिविरोधात् अत एव जगतोऽसत्त्वमपि श्रुतिविरुद्धम्। तार्किकादिदृष्टान्तस्तु विषम, नहि तार्किकैस्तमसोऽतिरिक्तत्व स्वीक्रियते किंतु परैर्देशमद्रव्यत्वेन स्वीकृतस्य खण्डन तैः क्रियते। एवमेव सप्तमपदार्थत्वेन वैशेषिकैः स्वीकृतस्याभावस्य प्रभाकरेणाधिकरणात्मकत्व प्रतिपाद्यते, एव परेण यदि माया स्वीकृता स्यात्तया च तस्या असत्त्व प्रतिपादित स्यात्तदा तथापि मायावादित्व न स्यात्त्वयैव किंतु सदसद्भ्यामनिर्वचनीया भावरूपा च महतायासेन महाविद्यानुमानैश्च साधिता। यथा तमोवादिभिस्तमसोऽतिरिक्तत्व साधितमतस्त्वयि मायावादित्व कथ न स्यादस्माभिश्च तमसो भावात्मकत्वमिवाभावस्याधिकरणात्मकत्वमिव मायाया भगवच्छक्त्यन्तर्गतत्व तार्किकादिवत्साधित तेषु तमोवादित्वाव्यवहारवदस्मासु न मायावादित्वव्यवहार। ब्रह्मणो लीलादिवर्णन तु व्यासशुकाद्यैर्यथा कृत तथैवास्माभिरनूद्यते नापूर्व, तत्र मायावादित्व मिथ्यावादित्वं किंचित्कल्प्यते कल्प्यताम्। प्रामाणिकत्वाद्यारोपस्त्वसुरबुद्धीनामेवातद्व्यामोहाय मायावादित्वमिथ्यावादित्ववद् दुर्वादित्वमपि सगच्छते। प्रकृतमनुसराम — मिथ्यावादिनस्तावदय सिद्धात, वादिप्रतिवादिगुरुशास्त्रवेदादीना सर्वेषा मिथ्यात्व मायिकत्व चेति। तावत्कथनेनैव सकलवादिपराजयसभवे पुन खडनादिप्रयास उन्मत्तत्वद्योतक एव। यथा रज्जुसर्प मिथ्यात्वेन जानतस्तदर्थ वदतस्तन्नाशार्थ च दडाद्याहरणादिक लोक उन्मत्तत्वव्यवहारहेतु, एव॥ किंच मायाया अघटनघटनापटीयस्त्वस्वीकारेण स्वमतखडनस्यापि सभावितत्वात्तदुद्धारार्थं यत्नोऽपि निरर्थक एव, तथा च स्वमतमहत्त्ववैवाय ग्रथरचनादिप्रयास स्वमतानभिज्ञत्वप्रकाशक एव। अस्माभिस्त्वासुरयुक्तिमोहिता लोका मा भूवन्नतो वैदिक पथा प्रदर्श्यते। अत एव तदुक्त्यो दुष्यते। तत्र पारमार्थिकभेदो न न समत इत्यादिविद्वन्मण्डनोक्तमनूद्य (मनोमयत्वादिविषयवाक्योक्तधर्मविशिष्टब्रह्मैवास्मिन्वाक्य उच्यत इत्येतत्कथनमसगत सूत्रतात्पर्यार्थाभाना) दित्यादि यदुक्तवान् तदपि सूत्रार्थाज्ञानात् तत्र हि वेदबोधितत्वान्मनोमय प्राणशरीरो भारूपत्वेन विज्ञानमयो जीव प्राणधारणप्रयत्नवान्ब्रह्मत्वेनोपास्य, सम आत्मेति कथनाच्च वा सत्यसकल्पादिपदोक्तधर्मवैशिष्ट्याद् ब्रह्मोपास्यमिति सदेहे उपक्रमस्यासनातविरोधित्वेन बलवत्त्वात्तत्र जीवस्यैव प्रतिपादनात्

मनोमयत्वेन जीवस्यैव प्रतिपिद्धत्वाच नेद ब्रह्मवाक्य किंतु शाखांतरोक्तविज्ञानमयस्यात्र भारूपत्वेन प्रत्यभिज्ञानात् कार्ये जीवे कारणस्य ब्रह्मण उपचार विधाय सत्यसकल्पादिधर्मवत्तया वेदाभिमानी देवता जीवो वास्त्विति पूर्वपक्षे सिद्धांतमाह "सर्वत्र प्रसिद्धोपदेशात्" इति 'सर्वं खल्वि'तिपूर्ववाक्यैर्यज्जगतो ब्रह्मत्वेनोपासन तद्गगवत एव विराट्त्वेनोपासन सत्फल चात करणशुद्धिर्ब्रह्मत्वेनोपासनया शुद्धात करणस्य सर्ववेदांतप्रसिद्धब्रह्मोपदेश एवमुक्तो मननरूपो नतु कचित् प्रसिद्धस्य जीवस्योपासना, तस्मात् सर्वत्र प्रसिद्धब्रह्मोपदेशादिक वाक्य मनोमयत्वादिगुणक ब्रह्मैव प्रतिपादयति ॥ "स सर्वथा वृत्त्यनुभूतसर्व आत्मा यथा स्वप्नजनेक्षितैक । त सत्तमानदनिधिं भजेत नान्यत्र सज्जेद्यत आत्मपात" इत्यादिवाक्यानुरोधात्। नन्वत्र सूत्रे पक्षस्यानुक्तत्वाद्धेत्वसगतिरिति चेन्मैवम्, सूत्रे पक्षानुक्तावपि प्रकरणबलेन तन्निर्णयस्य शक्यत्वात्। एव विषयवाक्यमेव पक्ष । सर्वं खल्विति वाक्य ब्रह्मप्रतिपादक सर्ववाक्यसमर्पितसर्ववेदान्तप्रसिद्धब्रह्मोपदेशरूपत्वात्, यदेव तदेव, तदेन्न क ब्रह्मेत्यादिवाक्यवत्॥ नन्वस्य ब्रह्मप्रतिपादकत्व न सम्भवति। फलस्य प्राकृततया जघन्यत्वात् यथासकल्पमग्रिमदेहकथनात् लोकान्तरभाविवादृशदेहप्राप्त्यर्थं वेदाभिमानिदेवताया क्रतुमय इत्यादिना साधकस्योपक्रान्ततया जीवस्यैवोपासना युक्ता। देहस्य लोकान्तरे प्राप्यस्य प्राकृतत्वव्याप्यत्वात्। ब्रह्मज्ञानस्य 'तमेव विदित्वातिमृत्युमेती'त्यादिवाक्यैर्मुक्तिफलत्वबोधनात्तादृशफलकथनमसगत ब्रह्मवाक्यत्वकल्पने स्यादत सूत्रकार आह "विवक्षितगुणोपपत्तेश्च" विवक्षिता वक्तुमिष्टा उपादेयत्वेनाभिप्रेता वा ये गुणा लोकान्तरे सकलरूपदेहप्राप्तिरूपा ये गुणास्ते ब्रह्मज्ञानवत्स्वेप्युपपद्यते, भगवत्सारूप्यलाभस्य हि देहत्व प्राकृतत्वव्याप्य मानाभावात्। किंच यथा क्रतुरित्यादिना लोकांतरप्राप्यत्वे सकल्पानुरूपेण व्याप्तेरुक्ते क्रतु कुर्वीतेत्युपदेशबोधित क्रतुरधमस्य प्राकृतदेहस्य प्राप्त्युपायो न युक्त, परमशान्तस्य पूर्वोपासनाशुद्धात करणस्याशुद्धसकल्पवशात्तदभावे प्राकृतदेहायोगात् परमपुरुषार्थ एव तस्य फल, तथा च सिद्ध मनोमयत्वादिधर्मक ब्रह्मैवास्मिन्वाक्ये प्रतिपाद्यत इति। एतेन (मनोमयत्वादिगुणानामीश्वर उपपत्त्युक्तौ तद्वाक्यस्य जीवपरत्वशकानपगमाच्चे) त्यादिकमपास्तम्, तादृशशकाया सूत्रेणैव निरस्तत्वादिति बोध्य। पचम्यसगता वक्तुमुचितमित्यादि तु यत्भाषित, तादृशपचम्या तादृश व्याख्यानस्य बहुग्रन्थेषु दृष्टत्वात् (यथा चाविद्याया अनादित्व हेतुत्व च, तदनादित्वेपि नाविरत सृष्टिर्न वा सदचेत्येवकारविरोधो यथा च कर्मणा हेतुत्व तथोक्त तृतीयश्लोकव्याख्यावसर) इति यदुक्त तदपि न किंचित्, यद्यपि त्वयोक्त तत्तत्सर्वं तत्रैव सम्यक्तया खडितमिति ते दोषा जागरूका एवेति यदि स्मार्तमतमवलम्ब्यैरुक्तत्वादि त्वया स्मार्तमतावलम्ब क्रियते तदा गुणानामित्याद्युक्तो दोषस्त्वदुपरि पतेदेवेति कथ निरनुयोग ? किंच मायास्वरूपातिरिक्तगुणापेक्षायास्त्वन्मतनगीकारेपि कर्मणामपेक्षा तु स्वयंवोक्ता। एव च तेषा जडाना स्वय कर्तुमसमर्थानामीश्वरेच्छैव सहकारिणी वाच्या, तथा च तद्धेतोरिति न्यायेनेच्छैव हेतुरस्तु किं कर्मभिरिति दोषस्तु दुरुद्धर एवेति कृतेप्यपह्नवे न दोषपरिहार', न च तद्धेतोरेवास्तु न्याय कुलाल्यंमव्यभिचारीति वाच्य, तद्धेतोरिति न्यायस्य

'कारणमादाय वा यस्ये'त्यन्यथासिद्धिद्योतकत्वात्, यथा रूपस्य घटं प्रति हेतुत्वं स्वतो न सम्भवति किन्तु दण्डमादायैवातो दण्डस्यैव घटं प्रति हेतुत्वसम्भवे तद्रूपस्यान्यथा सिद्धत्वं, एवं गुणानां स्वकार्यजननेऽसमर्थानां सर्वेपयार्यमीश्वरेच्छापेक्षणे स्वतन्त्रान्वयव्यतिरेकशून्यतया कारणत्वं न स्यात्किंतिरिच्छाया एव कारणत्वं, तेषामन्यथा सिद्धत्वमिति तात्पर्यम्। तत्र कुलालादौ व्यभिचारप्रदर्शनं तस्यार्थानभिज्ञतयैव। नहि कुलालेन घटे जननीये स्वहेतुभूतपित्रादिकमपेक्षते येन तद्द्वेतोरेवेति न्यायस्य व्यभिचारस्तत्र स्यात्। एवं च स्वतन्त्रान्वयव्यतिरेकशालित्वेन कुलालस्य हेतुत्वं युक्तमेवेति (सन्मूल। इत्यादेस्तु सतः प्रजाभ्रमाधिष्ठानतयोपपत्तिरुक्ता पूर्वभागे) इति यदुक्तं तदपि तादृशभ्रमासम्भवेन तत्रैव निरस्तम्॥ किंच तादृशभ्रमस्वीकारे सदायतनाः सत्प्रतिष्ठिता इत्यादि श्रुतेरसगतिर्नहि शुक्तिरजतस्य शुक्तिप्रतिष्ठितत्वं तथा सति त्रैकालिकनिषेधप्रतियोगित्वकथनमसगतं स्यादिति दिक्॥ यत्तु (नतूपहिते घटक्रियैवेति तु न युक्तं, आकाशस्य विभुत्वेन वास्तवक्रियानाधारत्वेन तादृशक्रियाया घटमात्रे सत्त्वेपि कल्पितक्रियायास्तादवस्तुल्यदेश्व यथाकाशे सत्त्व) मित्यादिना यदुक्तं तदपि मन्दं, आकाशकल्पितक्रियायाः सत्त्वाकारेण घटक्रियैवेति दृष्टान्तस्य युक्तत्वप्रतिपादने 'घटसंवृतमाकाशं नीयमाने यथा घटे। घटो नीयेत नाकाशं तद्वदात्मा नभोपम' इत्यादिगौडपादवचनविरोधापत्तेः। तैराकाशस्य स्पष्टतया क्रियासामान्यानाधारत्वप्रतिपादनात्। यदि च कल्पितस्य त्रैकालिकनिषेधप्रतियोगित्वात्सत्त्वेपि क्रियानाधारत्वमेवाकाशस्येति न तादृशवचनविरोध इत्युच्यते तदा घट एव क्रियायाः स्वीकृतत्वेन न युक्तमिति कथनं बालिशत्वद्योतकमेव। एवं सोपाधिकस्य हेतुत्वे उपाधेरेव हेतुत्वपर्यवसानाद्ब्रह्मणो जगद्धेतुत्वप्रतिपादकश्रुतिविरोधो दुरुद्धर एव, "जन्माद्यस्य यत' इत्यादिसूत्रविरोधश्च स्यात्, उपाधेरनादित्वसादित्वविकल्पदोषा। अधिकं च चतुर्थश्लोकव्याख्यायां यत्तत्रोक्तं तत्तत्रैव दूषितं इति द्वितीयखण्डखण्डनाभासस्याभासत्वप्रदर्शनम्। अथ द्वितीयस्तु स्यान्न स्याद्विरोधाद्यत्वादि तृतीयखण्डखण्डनाभासस्याभासत्वं प्रदर्श्यते। तत्र जडजीवधर्माणां ब्रह्मणि निषेधः प्रतिपादितो विष्णौ जीवगतकर्तृतेति श्लोकखण्डनावसरे ब्रह्मणि विशेषा न निरूप्यते अतन्निषेधे विशेषाणां मिथ्यात्वं न स्यादित्यपि तत्रैव निरस्तं इष्टापत्तिपराहतं च वेदस्य प्रतारकत्वापत्तिश्च स्यात्। न च मिथ्यात्मना विशेषाणां मिथ्यात्वेनाकथनात् नहीमे विशेषा मिथ्या एव कुत्रापि वेदे प्रतिपाद्यते नापि तात्पर्येण, तथा सर्वत्रैवेदान्तानां ब्रह्मणि तात्पर्यस्योक्तत्वात् उपक्रमोपसंहारादिषड्विधतात्पर्यनिश्चायकलिङ्गानां ब्रह्मविषयत्वात्। उपासनार्थं क्वचिद्विशेषानुवाद इत्यपि न किंचित्। ब्रह्मधर्माणामन्यत्राप्रसिद्धानां वेदैकसमधिगम्यानां प्रमाणान्तराप्राप्ततयानुवादासम्भवात्। एतेन तत्र जडवर्गस्येत्यादिकं निरस्तम्। यत्तु तथाहीत्यादिना अध्यारोपापवादस्वरूपकथनं स्वज्ञानादिरयुक्तं, तदज्ञानं त्वन्निष्ठमेव। नह्यनुवादकस्य परोक्तमनुवदतः स्वदुक्तार्थस्य सम्यक्त्वेऽसम्यक्त्वे वा दोषोस्ति किंतु वक्तुरेव। अन्यथा भ्रान्तिज्ञस्यापि भ्रान्तत्वापत्तेः। अस्थूलमनण्वित्याद्युक्त्वा एतस्यैवाक्षरस्य प्रशासन इत्याद्युक्तेर्निरुद्धधर्मविशिष्टं ब्रह्मैव तत्र तत्र प्रतिपाद्यते। स्वदुक्तगतिश्च पंचमचतुर्थश्लोकनिरासकाले

पूर्वभाग एव निरस्ता। अनुवादस्य बाधितविषयत्वमिष्टं चेत् "दृष्टिर्हिमस्य भेषजम्" मित्याद्यनुवादेऽप्यप्रामाण्यशंका स्यात्। जगदनुवादस्य बाधितविषयत्वे जगदंतर्गतवेदस्य बाधितत्वात्तदनुवादस्य बाधकवादकस्यानुवादो वेदस्य स्याद्भ्रान्तत्वात्तदनुवादस्य वेदस्यापि भ्रान्तत्वाच्छेदनतुल्य एवेति। एतेन (स्वान्तःशाखाच्छेदनादिदृष्टांतस्तु विषम) इति निरस्तम्। "अथ रथान् रथयोगान् पथः सृजत" इत्यादौ व्यभिचारश्च। तत्र हेत्वसंभवात्। "वैधर्म्याच्च न स्वप्नादिव" दित्यादिना प्रतिपादितस्वप्नविलक्षणजगत्निषेधप्रतिपादकत्वस्यैव हेतुत्वात्। दृष्टांतस्तु व्यभिचारीत्यप्यसंगतं दृष्टांतस्य व्यभिचारित्वेऽपि हेतोरव्यभिचारित्वेन क्षतेरभावात्। नहि दृष्टांतस्य व्यभिचारित्वे हेतोर्दुष्टत्वं संभवति येन तत्प्रदर्शनं संगतं स्यात्। ऐन्द्रजालिकेन यथा सत्यद्रव्यलिप्सया बाधितवस्तुनिर्माणं क्रियते तथेश्वरस्य प्रयोजनाभावात्, त्वन्मते सत्यप्रयोजनस्याप्यभावाज्जगन्निर्माणं न संभवति। तथा चैन्द्रजालिकवदिति दृष्टांतोऽसंगतः। स्वप्नादिव्यभिचारश्च वैधर्म्यादित्यादिना प्रतिपादितसत्यार्थत्वप्रतिपादकत्वरूपहेत्वभावादेव न संभवतीत्युक्तप्रायम्॥ तात्पर्यविषयं तु निर्विशेषं ब्रह्मेत्यसंगतं, तात्पर्यं कस्यचिच्छब्दस्य वाच्य एव संभवति, यथा सैंधवपदस्य वाच्याश्वघोटकादौ प्रकरणात्तात्पर्यज्ञानं, यथा वा तीरपदवाच्ये तीरादौ गंगापदस्य। ब्रह्मणस्त्वन्मतेऽवाच्यतया तत्र तात्पर्यं न संभवति वाच्यत्वे निर्विशेषत्वहानिः स्यात्। यत्तु (प्रतीतिविषये रियं व्यवस्था तद्विलक्षणस्य जगतः स्वप्नवत् प्रतीति) रित्युक्तं, तदपि मन्दं, स्वाप्नप्रतीतेर्वासनाजन्यत्वेन जाग्रत्प्रतीतेरपि वासनाजन्यत्वे विनापि चक्षुःसंयोगादिकं घटादिप्रतीत्यापत्तिस्तादृशं स्मृतित्वं च स्यात्, चक्षुरादीनामपि तत्र सहकारित्वकल्पनान्न दोष इति चेत्, प्रत्यभिज्ञात्वापत्तिस्तथा सति सोयं घट इत्येव ज्ञानं स्यान्न त्वयं घट इति। नच दोषात्प्रमुष्टतत्ताकं ज्ञानं जायत इति वाच्यम्। अत्र दोषस्य मूलाविद्यारूपस्यैव त्वया वक्तव्यत्वेन तस्य च सोऽयं देवदत्त इत्यत्रापि सत्त्वात्तत्रापि देवदत्त इत्येव ज्ञानं स्यात्। तस्माद्घटादिप्रत्ययादौ वासनाया हेतुत्वासंभवेन स्वप्नादिदृष्टांतोऽसंगत एव। यदपि (हेतुभूतवासनायाः सत्यविषयकानुभवजन्यत्वगौरवादनुभवजन्यत्वमेवांगीक्रियत) इत्याद्युक्तं तत्तुच्छं, संस्कारं प्रत्यनुभवत्वेन कारणत्व उपेक्षात्मकानुभवादपि संस्कारोत्पत्तिः स्यादत उपेक्षान्यानुभवस्यैव कारणत्वमवश्यमेवमपि संशयात्मकानुभवादपि संस्कारोत्पत्तिभिया संशयान्योपेक्षान्यानुभवत्वेनैव हेतुत्वं वक्तव्यम्॥ न च संशयस्यानुभवत्वाभावादेव संशयात् संस्कारानुपपत्तौ संशयान्यत्वनिवेशो व्यर्थ इति वाच्यम्, तर्हि सत्यविषयकस्याप्यनुभवत्वासंभवेन भ्रमसंग्रहार्थमनुभवजन्यत्वमेवांगीक्रियत इति कथनं तवासंगतं स्यात्तस्माद्भ्रमप्रमासाधारणमेवानुभवत्वं त्वत्संमतमिति संशयान्यत्वनिवेश आवश्यकः। एवं च संशयान्यत्वघटकस्य संशयत्वस्य स्वघटितधर्मावच्छिन्नप्रतिबंधकतानिरूपितप्रतिबध्यतावच्छेदकीभूता या स्वनिरूपितविरोधविषयता तन्निरूपितप्रकारतासामानाधिकरण्यसंबंधेन तत्प्रकारताविशिष्टप्रकारतारूपस्य निवेशे गौरवाल्लाघवेन भ्रमान्यानुभवत्वेनैव संस्कारं प्रति हेतुत्वान्न प्रतीतिस्त्वन्मते बाधिता [illegible] भवतीत्यन्यत्र विस्तरः। अत्र यावद्भिः संस्कारैरित्[illegible] दृष्टेनेति प्रतिपादितं

तत्र विचारसह, सृष्टेः पूर्वमदृष्टस्थितेरसम्भवादुत करणस्य तदुपाधिकस्य जीवस्य वा तदानीं त्वन्मतेऽभावात् मायाया तत्स्वीकारे तस्यानादित्वस्वीकारे च "एकमेवाद्वितीय"-मित्यादिश्रुतिविरोध । अदृष्टस्य दृष्टसामग्रीद्वारैव कार्यहेतुत्वं त्वया स्वीकरणीयमित्यभिप्राय तेनादृष्टेत्यादिकमसङ्गतम् ॥ धैधर्म्यचेत्यादिसूत्रविरोधोद्धारस्तु त्वत्कृतस्तत्रैव दूषित ॥ इति तृतीयखण्डनाभासस्याभासत्वप्रदर्शनम् ॥ अथ ननु जीवाविद्येत्यादिश्लोकोक्ते दर्शनादित्यतचतुर्थखण्डनाभासस्याभासत्व प्रदर्श्यते । तत्र मायायास्त्रिगुणात्मकत्वात्स्वच्छत्व न सम्भवति, तमस कलुषत्वस्य त्वदीयैर्वर्णनात् । रजसोपि निर्मलत्वाभावात् ब्रह्मणश्च निरूपत्वान्निर्विशेषत्वाच्च प्रतिबिम्बासम्भव । सर्वव्यापिनश्च प्रतिबिम्बो न सम्भवतीति सर्वमुक्तं प्राक् 'मायया प्रतिबिम्बित' इति श्लोकखण्डनावसरे गगनस्य प्रतिबिम्बेपि यदुक्तम्य तदपि तत्रैव प्रतिपादितम् । यत्तु किंचेत्यादिना कल्पनाशब्देन श्रौतार्थज्ञानस्यापि ग्रहण इत्यादिनोक्त तदपि त्वदुक्तार्थस्य श्रौतत्वे सति स्यात्, नहि त्वदुक्तरीत्या निर्विशेषस्य प्रतिबिम्ब श्रुतौ प्रपञ्चित इति त्वत्कल्पनाहेतुदर्शनमूलैव, सा च दृष्टान्त विना न स्वार्थसाधिकेति दृष्टान्ते प्रतिबिम्बो रूपवत, स एव चोभयवादिसिद्ध, ब्रह्मणश्च रूपाभावनिर्विशेषत्वाभ्या प्रतिभावानुमानेन तादृशहेतो सत्प्रतिपक्षितत्वमित्यभिप्रायेण तत्कथनमिति, अधिक तु पूर्वमेव प्रपञ्चितम् ॥ जीवब्रह्मणोरभेदोपि न सम्भवति "द्वा सुपर्णा सयुजा सखाया समान वृक्ष परिषस्वजात" इति श्रुतिविरोधात् । नच तत्त्वमसिश्रुतावप्यभेद एव तात्पर्यविषय इति वक्तु शक्यते उपक्रमोपसहारविरोधात् । भेदेनैवोपक्रम्य पुनरपि 'यदा पश्य पश्यते रुक्मवर्णं कर्तारमीश पुरुष ब्रह्मयोनिम् । तदा विद्वान्पुण्यपापे विधूय निरञ्जन परम साम्यमुपैती" त्युक्तम् । तत्रापि साम्यस्य भेदघटितत्वाद्भेद एव प्रतिपादित । एव च यदि बिम्बप्रतिबिम्बरूपौ जीवेशौ तादृशश्रुतेरभिप्रेतौ चेत्तदा ब्रह्मज्ञानेन जीवस्य ब्रह्मसाम्यस्य प्रतिपादन विरुद्धम् ॥ नहि त्वन्मते मुक्तस्यापि प्रतिबिम्बरूपता येन साम्य स्यात्, नच साम्यपदेनाभेद एव विवक्षित इति वाच्यम्, साम्यस्य भेदघटितत्वादत एव तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्व सादृश्यमिति प्रवादोपि सगच्छते । किंच तद्गतभूयोधर्मवत्त्वाशोपि त्वन्मते दुर्घट ब्रह्मणो निर्धर्मकत्वेन तद्गतभूयोधर्मस्यैवाप्रसिद्धे ॥ मोक्षदशाया जीवस्यापि निर्विशेषब्रह्मस्वरूपत्वाङ्गीकारेण भूयोधर्मवत्त्वस्य तदानीमसम्भवात् । एव "ऋत पिबतौ सुकृतस्य लोके" इत्यादिश्रुतिविरोधश्च । तत्रापि कर्मफलभोगस्य कूटस्थे त्वदभिमतेऽसत्वात् । नच छत्रिणो यान्तीतिवदेकस्य पातृत्वेप्यन्यस्य स्वार्थलक्षणया द्वाभ्य पिबताविदित्युच्यत इति वाच्यम् । वेदे लक्षणाया अन्याय्यत्वादेव 'गुहां प्रविष्टावात्मानौ तद्दर्शना' दिति सूत्रविरोध । अस्मन्मते नाय दोष । गुहा प्रविष्टौ आत्मानौ जीवब्रह्मरूपौ, गुहात्र हृदयाकाशस्तत्र प्रविष्टौ जीवपरमात्मानावेव, कस्माद्द्वे तथैव दर्शनात् । "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणी" त्यादिश्रुतावुभयो प्रवेशश्रवणात्, 'ऋत पिबता'विति श्रुतेरप्ययमर्थ । "ऋत सत्य पर ब्रह्मे" ति वाक्यादृत ब्रह्मैव, तथा च स्वरूपामृतपातारौ, सुकृतमपि ब्रह्मैव 'तस्मात्तत्सुकृत मुच्यत" इति श्रुतेस्तस्य लोकोक्षरब्रह्म तत्राऽक्षरात्मकभगवल्लोकस्थाना परमपराधौपरि

जीवब्रह्मणो परिदृश्यमानत्वात् तान्प्रत्येव कथं परोक्षवाद, छाया प्रतिमोरूप्यं गतस्य जीवस्यापि तथात्वात्छायारूपत्व, ब्रह्म प्रत्यग्ज्ञानत्वादातप । एवमेव द्वा सुपर्णावित्यादाव प्यस्मन्मते न विरोध । त्वन्मते जीवस्वरूपनाशस्यैव मोक्षपदार्थतया विरोधो दुर्वार एव । एव "जुष्ट यदा पश्यत्यन्यमीशमस्य महिमान" मिति श्रुतिविरोधोपि । एव मायाया ब्रह्माश्रितत्वे ब्रह्मणोऽज्ञत्वापत्तिरूपो विद्वन्मदनोक्तदोषोपि दुष्परिहर एव, त्वदुक्तं च पूर्वभाग एव खण्डितम्। इति चतुर्थपक्षखण्डनाभासस्याभासत्वदर्शनम् ॥ अपरं चेत्यादे-रत्मनिप्रसगेनेत्यतस्य पचमपक्षखण्डनाभासस्याभासत्व प्रदर्श्यते ॥ त्वन्मते जीवस्वरूप-नाश एव मोक्ष पर्यवस्यति, कुत "चैतन्य यदधिष्ठान लिंगदेहश्च य पुन । चिच्छाया लिंगदेहस्थ तत्सघो जीव उच्यत" इति जीवस्वरूप त्वदीयै प्रतिपादितम्। तत्र मोक्ष स्याविद्यानाशजन्यत्वादविद्यानाशे तत्कार्याणा लिंगदेहचिच्छायादीना नाशेन सघस्य नाशात्। अविद्याप्रतिबिंबो जीव इति मते चाविद्यानाशात्तत्प्रतिबिंबस्यापि नाशाज्जीवस्या लीकत्व स्यात्। त्वदुक्तसमाधान तु पूर्वभागेष्टमश्लोकखण्डनावसर एव दूषित, अस्मन्मते च जीवस्वरूपस्य नित्यत्वात्तच्छंकैव नावतरति। एतेन प्रत्युत त्वन्मत इत्यादिकमपास्तम्। यत्तु (सर्वं मिथ्येति निश्चयस्तु श्रवणादे, पर तदानीं तु न क्वापि प्रवृत्तिरिष्यतेऽत एव जनकादय सन्यासेपि न प्रावर्तंत) इत्युक्त तत्तुच्छम्। जनकादीनां राज्यसपादन कार्येषु प्रवृत्तेर्दर्शनात् न क्वापीत्यस्यासगतत्वात्। सन्यासादौ तु फलाभावाच्च प्रवृत्ति । किंच सर्वं मिथ्येति ज्ञानस्य प्रवृत्तिसामान्यप्रतिबधकत्वे ज्ञानित्वेनाभिमताना वृत्तश्रवणम-ननादीना शुकादीना परीक्षिदुपदेशादौ प्रवृत्तिर्विरुद्धा स्यात्। याज्ञवल्क्यादीनामपि गोप्रतिग्रहादौ तदर्थं शास्त्रार्थादौ चेदप्रतिपादिता प्रवृत्ति श्रूयते बृहदारण्यकादौ, सापि विरुद्धा स्यात्। किंच सन्यासग्रहणजन्यापूर्वस्य ज्ञानहेतुत्व यत्त्वन्मते प्रतिपादित तदपि जनकादेर्विनैव सन्यास ज्ञानोत्पत्तिं स्वीकुर्वता त्वया त्यक्त स्यात्। तथा च तत्र व्यभि चारेण कारणत्वानुपपत्त्या सन्यासस्यावश्यकत्वमपि न स्यात्। वस्तुतस्तु कर्मफलत्याग एव सन्यास । अत एव-"न कर्मणामनारंभान्नैष्कर्म्यं पुरुषोऽश्नुते। न च सन्यसनादेव सिद्धिं समधिगच्छती" त्यादि भगवद्वाक्यमपि सगच्छते। 'नाश्रम कारण धर्मे क्रियमाणो भवेद्धि स' इति याज्ञवल्क्यवाक्यात्केवलाश्रमग्रहणस्य धर्महेतुत्वाभावादाधुनिकाना सन्या साश्रममात्रग्राहिणामभितस्ततो जीविकार्थं धावमानाना न धर्मसिद्धिर्नापि मोक्ष इति निश्चीयते। यत्तु सर्वं मिथ्येति ज्ञानस्य श्रवणादिभिरसभावनादिनिवृत्तिसहकृतस्य श्रवणादिकप्रवृत्तिसामान्यप्रतिबधकत्वोपष्टभकतया "यत्र हि द्वैतमिव भवति तदितर इतर पश्यति यत्र त्वस्य सर्वमात्मैवाभूत्केन क पश्येदि"त्यादिवाक्यमुपन्यस्तम्, तदप्यज्ञानात्ता दृशश्रुते सुषुप्तिविषयत्वात्। अत एव "स्वाप्ययसपत्त्योरन्यतरापेक्षमाविष्कृत हि"ति सूत्रभाष्ये सुषुप्तिपरममुक्त्योरन्यतरापेक्षयेद विशेषविज्ञानाभावश्रवण हि यत प्रकरणा देवमाविष्कृत सुषुप्तिप्रकरणे तद्वाक्यमित्याद्युक्तम्। किंच तद्वाक्यस्य ज्ञानिविषयत्वे याज्ञ वल्क्यादेराचार्यत्व न स्यात् । यदि शिष्यादिज्ञान तस्यास्ति तदा तु ज्ञानाभावो, यदि नास्ति तदोपदेशासभव इत्युभयत पाश स्यात्, तस्मात् स्वमताज्ञानविजृंभितमेवेदम्।

किंचेत्यादिना दृष्टांतो यः प्रदर्शितः सोपि विषमः तत्र लिपौ मिथ्यात्वज्ञानाभावात् तज्ज्ञानजन्यार्थज्ञानस्यापि सत्यत्वात्तद्विषयभूतार्थस्यापि मिथ्यात्वाभावाद्दार्ष्टांतिके च संन्यासादीनां तत्फलानामैहिकामुष्मिकादीनां साधनानां च मिथ्यात्वात्। एवं च शास्त्रीयमार्गोच्छेदो दुरुद्धर एव। किंच सर्वस्य मिथ्यात्वे वेदस्यापि मिथ्यात्वात्तत्प्रतिपाद्यस्यापि मिथ्यात्वमेव स्यान्न हि प्रतिबिंबितरसालफलस्य सत्यत्वं तदर्थं च प्रज्ञावतां प्रवृत्तिरपि स्यात् मिथ्यात्वस्योभयत्राविशिष्टत्वादेकस्याभिमतसाधकत्वमपरस्य नेत्यत्र विनिगमकाभावात् एतेन प्रतिबिंबिताम्रफलेत्यादिकं निरस्तम्॥ अस्मन्मते च वेदगुरुशास्त्रादीनां सत्यत्वादबाधितार्थबोधकत्वात्सर्वस्मिन् मिथ्यात्वबुद्धेरभावाच्च त्वदुक्तस्य पूर्वं दूषितत्वाच्च न शास्त्रीयमार्गोच्छेदः। यत्तु (मुक्तेरपारलौकिकतया पारलौकिकत्वोक्तिश्छिलं) इत्युक्तं, तत्रोच्यते-मुक्तिस्त्वन्मतेऽनर्थनिवृत्ति "तरति शोकमात्मवि"दित्यादिश्रुत्या, तस्या एव ब्रह्मज्ञानफलत्वेन प्रतिपादनात् सा च ब्रह्मण्येव वाच्या। ध्वंसस्य प्रतियोगिसमानाधिकरणत्वात्प्रतियोगिनोविद्याकार्यशोकस्य तत्रैव कल्पितत्वांगीकारात्। एवं च ब्रह्मणोपि लोकशब्दवाच्यत्वात् ब्रह्मैव लोको ब्रह्मलोक इत्यादिना प्रतिपादितत्वात्तस्य चैतल्लोकाकार्यरूपात्परत्वात्परलोकपदबोध्यत्वेन तत्र विद्यमानानर्थनिवृत्तिरूपमुक्तेः कथं न पारलौकिकत्वमिति। वेदस्य व्यवहारमात्रबोधकत्वं तु न पूर्वमुक्तमिति वेदस्तु न व्यवहारमात्रबोधक इति निषेधोऽयुक्तः। व्यावहारिकं प्रामाण्यं तु यत्त्वया स्वीक्रियते तत्पूर्वोक्तदोषग्रस्तमेव। किंच त्वदुक्तयुक्तिभिर्वेदार्थो न विचारयितुं शक्यते। उक्तं च यतः "अलौकिको हि वेदार्थो न युक्त्या प्रतिपद्यते। तपसा वेदयुक्त्या तु प्रसादात्परमात्मन" इति। तस्माद्ब्रह्म यादृशं वेदैवगतं तादृशमेव मंतव्यम्। स्वबुद्ध्यान्यथाकल्पने तु 'योऽन्यथासतमात्मानमन्यथा प्रतिपद्यते। किं तेन न कृतं पापं चौरेणात्मापहारिणा'। "असूर्या नाम ते लोका अन्धेन तमसावृता। तांस्ते प्रेत्याभिगच्छंति ये के चात्महनो जना" इत्याद्युक्तदोष स्यात्। वेदस्याज्ञानकल्पितत्वस्वीकारे तु "स्वयंभूरेष भगवान् वेदो गीतस्त्वया पुरा। ब्रह्माद्या ऋषिपर्यंता वक्तारोस्य न कारकाः- अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवे" त्यादिवचनविरोधः। न च वेदस्याज्ञानकल्पितत्वेप्यबाधिततात्पर्यविषयार्थकत्वान्न तन्महिमापगम इति वाच्यम्। शब्दस्य महिमा स्वासोक्तत्वान्नित्यत्वाद्वा भवति। यतो भ्रमप्रमादविप्रलिप्सादिदोषवदुक्तशब्देऽप्रामाण्यग्रहसंभवेन महिमापगमो जायते। आप्तोक्ते नित्ये वा तदसंभवात् तत्र चाप्रामाण्यशंकासऽभवेन सिद्धानाद्दरणीयत्वाच्च महिमा। त्वन्मते चाज्ञानकल्पितत्वात् कल्पितपुरुषोक्तत्वाच्चाप्रामाण्यशंकाकलंकितत्वसंभवेनाबाधितार्थविषयत्वेपि न दोषपरिहारः। एतेन (इदं चाज्ञानकल्पितत्वे नापैति मानाभावा) दिति प्रलपितमपास्तम्॥ असत्वं तु कल्पितस्य नाश्रीयत इत्यप्युन्मत्तप्रलपितं, कल्पितत्वस्य मिथ्यात्वव्याप्यत्वस्वीकारेण मिथ्यात्वस्य च त्रैकालिकनिषेधप्रतियोगित्वरूपत्वात्तस्य सत्वे तादृशव्याप्तिभंगापत्तेः। कल्पिते मिथ्यात्वं न च सिद्ध्येत्॥ किंच श्रुतीनां मिथ्यात्वे नियतपूर्वसत्त्वरूपहेतुत्वमपि न स्यात्। त्वदुक्तं च सम्यक्तया दूषितं मागेव। तस्मात्त्वदुक्तरीत्या विचारः कर्तुं न शक्यते। "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' 'एतत्सत्यं' 'ऐतदात्म्यमिदं सर्वं" मित्यादि-

श्रुतेरतै प्रपंचस्य सत्यत्वनिश्चयेन प्रपंचेऽज्ञानकल्पितत्वस्य निश्चेतुमशक्यत्वात्। "आनंदमात्रकरपादमुखोदरादि" त्यादिश्रुतेर्ब्रह्मण साकारत्वनिश्चयाच। नचोपक्रमादिभिस्तादृशश्रुतीना न स्वार्थे तात्पर्यमिति वाच्यम्, उपक्रमस्य ब्रह्मविषयकत्वेन निर्विशेषत्वमिथ्यात्वयो श्रुतितात्पर्याविषयत्वेन तयोरपि त्वदभिमतयोरसिद्ध्यापत्ते। तस्मात्तपसा भगवत्कृपया वा वेदप्रतिपाद्य ब्रह्म ज्ञातुं शक्यम्। अत एव "भृगुर्वै वारुणिर्वरुण पितरमुपससार अधीहि भगवो ब्रह्मे "त्युपक्रम्य तैत्तिरीयोपनिषदि "तपसा ब्रह्म विजिज्ञासस्व तपो ब्रह्मेति तपस एव हेतुत्वमुक्तम्॥ शुष्कतर्कस्तु तर्काप्रतिष्ठानादित्यादिना निंदित॥ यत्तु श्रुतीना बलवत्त्वाबलवत्त्वमुक्त तत्तुच्छम्। उभयोरपि वेदत्वेन प्रामाणिकत्वादेकतरनिर्द्धारणस्याशक्यत्वात् "सर्वे वेदा यत्पदमामनन्ती" त्यादिना सर्वेषा वेदाना साक्षात्परपरया ब्रह्मपरत्वात्। नच विरुद्धवाक्यश्रवणाद्विरोधनिरासार्थं विचार कर्तव्य इति वाच्यम्, अचिंत्यानतशक्तिमति सर्वभवनसमर्थे ब्रह्मणि विरोधाभावाद्विरोधस्य वक्तुमशक्यत्वात्। स्यादेतत्॥ दशमस्त्वमसीत्यादौ शब्दादपि दशमोहमित्याकारकात्साक्षात्काररूप फल विचारद्वारा दृश्यत इत्यस्मदीत्या विचारे दृष्टमेवाज्ञाननिवृत्तिरूपमात्मसाक्षात्काररूप च फलमिति चेन्मैवम्। उक्तवाक्यदृष्टातेन विचारद्वारा आत्मसाक्षात्कार कस्यापाद्यते। किं देहविशिष्टस्यात्मवेदिनो देहात्मवेदिनो वा विविक्तात्मवेदिनो वा? नाद्य। व्यामुग्धादिषु परेण बोध्यमानस्य दशमस्त्वमसीति वाक्येन तद्विशिष्टस्य बाह्यस्यैव देहादेरात्मत्वप्रसिद्ध्या तादृगज्ञानस्यात्मविषयकत्वाभावात्। अत एव न द्वितीयोपि नापि तृतीय, तस्यात्मविस्मृत्यभावेन तत्र शब्दस्याकारणत्वात्। नहि समीपवर्तिभिरिंद्रियैरग्राह्य आत्मा तद्वाक्येन शब्दप्रमाणेन ग्राहयितुं शक्यते। अथ दर्शनाव्यवधानेन श्रवणस्य विधानाच्छ्रयत इत्युच्यते तदा मननिदिध्यासनवैयर्थ्यम्। तथा च दृष्टातवैषम्यान्मनन निदिध्यासनविरोधाच्चात्मसाक्षात्कारस्य न श्रवणफलत्व विचारफलत्व सभवति॥ अथ मुख्याधिकारिण शब्दादपरोक्ष भवति न तु मदादेरिति तादृशेषु मननाद्युपयोगात्तत्तद्विचारानर्थक्यमिति चेन्न। शब्दजन्ये ज्ञानेधिकारिभेदस्तदा कल्पनीयो यदि तत्कल्पने विधिसार्थकता स्यान्न त्वेव, मदस्य पदशक्त्यादिज्ञानशून्यतया मननादौ सामर्थ्याभावात्। मध्यस्य पदपदार्थससर्गज्ञानत्वेन आकाक्षायोग्यतादिवशाद्दशमादिवदपरोक्षज्ञान मननादिक विनैव भविष्यतीति मननाद्यनुपयोगान्मननादिविधिवैयर्थ्य दुर्वारमेव। नच पदार्थ ससर्गज्ञानसत्त्वेपि विपरीतभावनादिदोषदूषितस्य तात्पर्यनिश्चयाभावाच्छब्दादपरोक्ष ज्ञानासभवात्तादृशमध्याधिकारिणि विधिसार्थक्यसभवान्न वैयर्थ्यमिति वाच्यम्। "असतासत्यपि ह्यर्थे ज्ञान शब्द करोति ही" ति सिद्धांतस्वीकर्त्रा त्वया शब्दबोधे योग्यताज्ञानस्याकारणत्वस्य स्वीकर्तव्यतयाऽसभावनादीनां त्वन्मतेऽकिंचित्करत्वात्। किंच शब्दादपरोक्षज्ञानोत्पत्तिस्वीकारेपि न तन्मात्रत्तदुत्पत्ति स्वीकर्तव्याऽन्यथाऽधस्यापि दशमस्त्वमसीति शब्दजन्य प्रत्यक्षात्मक ज्ञान स्यात्, तथा च तादृशज्ञाने शब्दस्य मन सहकारित्व वक्तव्यम्॥ एव च शब्दस्य प्रमाणातरत्व न स्यात्, तदेव हि प्रमाणातर यदा साधारणप्रमाणातरासहकारिसहकार्यासाध्यमनोवहिर्गोचरा प्रमा जनयति,

तत्रालोके चाक्षुषप्रमाऽसाधारणसहकार्यासाध्यमनसो बहिर्गोचरप्रमाजनकत्वादालोकस्य प्रमाणांतरत्वापत्तिभिया प्रमाणान्तरासहकारित्वस्याप्ययं निवेशनीयतया तेन विशेषणेन यथाऽऽलोकस्य चक्षुःसहकारित्वेन न प्रमाणांतरत्वं तथैव शब्दस्यापि प्रमाणांतरस्य चक्षुषः सहकारित्वात्प्रमाणान्तरत्वं न स्यादित्यलं पल्लवितेन। ज्ञानिनामपि चेतांसीति श्लोके ज्ञानिपदमोहपदयोरर्थान्तरपरत्वं यदुक्तं, तदपि प्रमादात्। तत्र ज्ञानिपदस्यासाधारणज्ञानविशिष्टवाचकत्वादन्यथाऽपिकारस्यासंगतिः। किंचेत्यादिकं तु निदाघटितत्वादुपेक्षितम्। इति पंचमखंडखंडनाभासस्याभासत्वप्रदर्शनम्॥ अथापरं च श्लोके द्वीत्यादस्येति पक्षोऽभ्यगत इत्येतस्य षष्ठखंडखंडनाभासस्याभासत्वं प्रदर्श्यते। तत्र द्रष्टृत्वनियामकत्वं न शुद्धस्य किंतु शबलस्येति कर्तृत्ववत्तदुपपत्तिर्मायासंबंधस्यावच्छेदकत्वेन प्रतिबिंबत्वेन वा स्यादित्यादि यदुक्तं तदसंगतम्। शबलस्य द्रष्टृत्वे मायासंबंधोपि तथैव वक्तव्यः। सा माया एकाऽनेका वा नांत्यः, अजामेकामित्यादिश्रुतिविरोधापत्तेः, नाद्यः मायासंबंधं विना शबलत्वानुपपत्त्या मायासंबंधश्च शबलत्वाधीन इत्यात्माश्रयप्रसंगात्। किंच निर्गुणस्य मायासंबंधास्वीकारे शबलं पदार्थान्तरमेव स्वीकरणीयम्, एवं चाद्वैतहानिः। यदि च शुद्धस्य मायासंबंधस्तदा मायाया अनादित्वाच्छबलं ब्रह्मानादीत्युक्तं स्यात्। निर्विशेषत्वं तु मायानाशे संभावितं, तथा च सिद्धवन्निर्गुणप्रतिपादनं विरुद्धं स्वमतहानिश्च। अपि च "सदेव सौम्येदमग्र आसीत्तदैक्षत आत्मा वा इदमेक एवाग्र आसीत्स ईक्षांचक्रे" इत्यादिश्रुतिषु सर्वत्र द्रष्टृत्वप्रतिपादनाच्छबलमेव प्रतिपाद्यमिति त्वया वाच्यम्, तथा च निर्गुणप्रतिपादकश्रुतेरभावान्निर्विशेषे मानाभाव एव स्यात्। नच "निर्गुणं निष्कलं शांतं निरवद्यं निरंजन" मिति श्रुतिः प्रमाणमिति वाच्यम्, तत्रापि "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी" ति जगत्कर्तृत्वस्याग्रे प्रतिपादनात्तस्य च कर्तृत्वदुपपत्तिरिति वदता त्वया शबलधर्मत्वमेव स्वीकृतम्। एवं च तादृशश्रुतीनां निर्गुणपरत्वं कर्तृत्वविरुद्धं निर्गुणस्यैव कर्तृत्वेऽपसिद्धांत.। संबंधोपि न संभवति प्रतिबिंबवादस्य पूर्वं दूषितत्वादवच्छेदवादोपि न संभवति, संबंधं विनावच्छिन्नत्वस्यैवासंभवेन मायावच्छिन्न ईश इति परिभाषाया असंभवात्, अवच्छिन्नपदार्थातिरिक्तेऽश्च तार्किकादिमतस्वरूपसंबंधरूपस्यानतिरिक्तवृत्तित्वरूपस्य वाऽवच्छेदकत्वस्य त्वन्मते मायायां वक्तुमशक्यत्वादधिकमन्यत्रानुसंधेयम्। मायाया एकत्वेपि जीवे तत्कृतमावरणमस्ति नेश्वर इति यदुक्तं तदपि न किंचित्। उपाधेरेकत्वे फलवैलक्षण्यस्य वक्तुमशक्यत्वात्। उपाध्योर्भेदे मायाजीवेशावाभासेनेत्यादि त्वदुक्तमसंगतम्। अधिकं च निरूपितमधस्तात्। यत्तु (जीवकल्पितदृष्टृत्वादेः प्रवेशस्य च स्वमस्येव श्रुतावनुवादे दोषाभावाच्च) त्वदुक्तं तदत्यन्तमसंगतम्। "तदैक्षत सेयं देवतैक्षत, तत्सृष्ट्वा तदेवानुप्राविश" दित्यादिश्रुतिप्रतिपाद्यदृष्टृत्वस्य प्रवेशस्य च तत्काले कल्पकस्य जीवस्याभावात् तत्प्रकरणे जीवकल्पितत्वबोधकपदाभावाच्च तादृशश्रुतिर्बाधो दुरुद्धर एव। एतेन (शरीरादिकं तु परकल्पित) मित्यप्यपास्तम्। तथासति ब्रह्मापि पराज्ञानकल्पितमिति कथं न ब्रूयाज्जीवन्मुक्तिरपि न संभवति। तत्रापि ये दोषास्ते तृतीयश्लोकखंडने दर्शिता इति किं पिष्टपेषणेन। यदपि (भोगार्थं

स्वीकृतप्रारब्धस्य भोगदातृता न युज्यत ) इत्याद्युक्तं तदपि मन्दं, तादृशस्वीकारस्य युक्तिविरुद्धत्वात्, ज्ञानेनाविद्यानाशे प्रारब्धस्याविद्याकार्यस्य स्थातुमशक्यत्वात्। 'ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेर्जुनेति' स्मृतेः। सुषुप्तौ भोगाभावादिति यदुक्तं तदपि प्रत्यक्षविरोधादुपेक्ष्यम्। 'सुषुप्तिकाले सकले विलीन' इत्यादिश्रुतेश्च सकलपदस्य सुषुप्तपुरुषभिन्नलीनत्वेन सकोच्यत्वादिंद्रियलयमेव सा श्रुतिः प्रतिपादयति न शरीरलयमिति। एतेन तदुपष्टंभकतया श्रुतिप्रदर्शनं निरस्तम्॥ इति षष्ठखंडखण्डनाभासस्याभासत्वप्रदर्शनम्। अथ स्यादेतत्तत्र वयमित्यादेः सप्तमखंडखंडनाभासस्याभासत्वं प्रदर्श्यते। प्रतिबिम्बवादस्य दूषितत्वात्तथापीत्याद्यसंगतः, तथापीत्यादिना दृष्टान्तेन भेदप्रतीत्यसंभवो नास्तीत्येवोपपाद्यते। तदपि तदा स्याद्यदि तादृशदृष्टांतेन प्रकृते भेदप्रतीत्यसंभवो न स्यात्स एव तु तदवस्थः, अत्र भेदप्रतीतेरुपपादयितुमशक्यत्वात्। द्विचन्द्रदर्शनस्थले दोषदूषितचक्षुर्द्रष्टा दृश्यश्चंद्रश्च पूर्वं सिद्धस्तत्र भेदप्रतीतिः संभवति। प्रकृते दोषविशिष्टस्य द्रष्टुरभावाद्भेदप्रतीतिर्न संभवतीत्याक्षेपस्य वज्रलेपत्वाद्व्यर्थैवेदं ग्रंथगौरवम्। यदपि ( नियामकत्वंद्रष्टृत्वादि स्वप्नदृष्टान्तेनोपपाद्यते स्वप्ने देवदत्तस्यैकस्यैव नियंतृत्वद्रष्टृत्वादिदर्शना) दित्युक्तं तन्न रमणीयम्। दृष्टान्तस्योभयवादिसंमतस्यैवाभिमतार्थसाधकत्वेनास्मन्मते स्वप्ने यद्येकस्य द्रष्टृत्वं नियामकत्वं च सिद्धं स्यात् तदा तद्दृष्टांतेन प्रकृतेपि तत्स्यात्तदेव तु न, स्वप्ने ईश्वरेण जीवव्यामोहार्थं सृष्टिः क्रियते, यथैंद्रजालिकेन नटेन सामाजिकव्यामोहनकौतुकार्थं मायिकसृष्टिः क्रियते तथा। एवं च द्रष्टा जीवो नियंता च परमेश्वर इति स्वप्नेपि नैकस्मिन्द्रष्टृत्वनियंतृत्वेऽस्मत्समते तद्दृष्टान्तेन प्रकृतेप्येकस्मिन्न स्यातां, अत एव "मायामात्रं तु कार्त्स्न्येनानभिव्यक्तरूपत्वा"दिति सूत्रेण स्वप्नस्य भगवता मायामात्रत्वमुक्तं तन्नियामकत्वमपि भगवत एव युज्यते तस्यैव मायेशत्वात्। अष्टमस्कंधे श्रीमद्भागवते 'नटवन्मूढमायाभिर्मायेशान्नो जिगीषसि' प्रथमस्कन्धे च 'अपश्यत्पुरुषं पूर्वं मायां च तदपाश्रयाम्। यया संमोहितो जीव आत्मानं त्रिगुणात्मकम्। परोपि मनुतेऽनर्थं तत्कृतं चाभिपद्यते'। तस्माद्विश्वस्य व्यामोहिका शक्तिर्माया, तदेकोपादानक एव स्वप्न इति तत्रापि नैकस्य द्रष्टृत्वं नियंतृत्वमिति दृष्टान्तासिद्ध्या दार्ष्टान्तिकासिद्धिः। ब्रह्मणि मायासबंधेऽसङ्गत्वहानिः तत्कृतविक्षेपांगीकारे निर्विकारत्वहानिः। जीवे तत्कृतावरणस्वीकारे जीवस्य ब्रह्माभिन्नत्वेन ब्रह्मणि मायाकृतस्यावरणस्याभावप्रतिपादनमसंगतम्। एतेन ( ब्रह्मणि मायाकृतस्यावरणस्याभावेपी ) त्यादिकं निरस्तम्॥ ब्रह्मण्यनेकावभासस्यासंभवेन तदवभासविषयेऽनेकावभासप्रतिपादनं तु खपुष्पसौरभप्रतिपादनतुल्यम्। किंचानेकावभासस्वीकारे स्वप्ने दृश्यमानानां पुरुषाणामपि त्वन्मतेऽनेकावभासापत्तिः। यत्तु विषयविषयिभावविरोधप्रतिपादके जीवो न जीवाभासवान् तदभावविषयत्वादित्यनुमाने जडत्वोपाधिप्रदर्शनं तन्न सम्यक्, उपाधेः साधनाव्यापकत्वासंभवात्। यथा चन्द्रे दण्डत्वमुपाध्यंशमादाय स्वीकृतं, तथैवोपाधिसबंधस्य जीवेप्यवर्जनीयत्वेन तत्राप्युपाध्यंशमादाय जडत्वसत्वेन तस्य साधनाव्यापकत्वाभावात्। चंद्राभासाभाववति तच्चैतन्यांशे जडत्वस्यासत्वेन साध्याव्यापकत्वाच्च। नच न द्वित्वेन चंद्रात्मनोर्दर्शनं किंतु तन्मण्डलस्येति

वाच्यम् । सद्घातस्यैव प्रत्यक्षेण ग्रहणात् एकतराग्रहणे हेत्वभावात् । एकस्मिन् भेदप्रतीते प्रकृतेऽसभवादिद चेत्यादिकमसगतम् । विभुद्वयसयोगो नास्तीति निर्मूल-मिति यदुक्त तदेव निर्मूलम् । अप्राप्तयोस्तु या प्राप्ति स सयोग इति सयोगलक्षणम् । सा चोभयकर्मणा एकतरकर्मणा वा भवति । विभ्वो पूर्वमप्राप्तत्वाभावात् पुन प्राप्ति-हेतो कर्मणश्च तत्राभावात्कथ सयोगलयो स्यात् । न च जन्यसयोगस्यैवेद लक्षण तस्यैव कर्मजन्यत्व न नित्यसयोगस्येति वाच्यम् । त्वन्मते कालाकाशयोरप्यनित्यत्वे-न तत्सयोगे नित्यत्वस्य वक्तुमशक्यत्वात्, अन्यथा द्वैतहानि स्यात् । 'आभूतसप्लव स्थानममृतत्व तदुच्यत' इति वाक्यात्प्रलयावधिस्थायित्वमेव नित्यत्व विवक्षितमिति चेद्दु-दयाचलास्ताचलयोर्विभागोपि नित्य स्यात्, नच सयोगनाशको गुणो विभाग इति तल्लक्षणात्तस्य च सयोगनाशकत्वाभावात् कथ विभागत्वमिति वाच्यम् । जन्यविभागस्यैव तल्लक्षण ननु नित्यस्येति न तत्र सयोगनाशकत्वनियम इत्यस्यापि वक्तु शक्यत्वात् । किंच लक्षणानामितरभेदानुमापकतया सयोगस्य नित्यत्वे तत्र लक्षणासत्त्वाद्भागासिद्धि स्यात् । यत्तु अध्यासोपि जीवस्यानादिर्भवत्येव स एवेशाविद्ययो सबन्ध इत्युक्त, तदपि तुच्छम् । उन्मत्तप्रलपिततुल्य च । जीवस्याध्यास इत्यनेन जीवाध्यास इत्युक्त्वा पुनरीशमाययो सबध इत्युक्तिर्न सभवति, नहि घटनिष्ठसयोग पटभूतलयो सबन्ध इति वदन्नादरणी यवचनो भवति । सबन्धिवृत्तित्वनियमात् । नच जीवेशयोर्भेदाभावात् जीववृत्त्यध्यास ईशवृत्तिरपीति भवत्यविद्येशयोस्तत्सबध इति वाच्यम्, तस्य जीवेशवृत्तितायाः बहुशो निरस्तत्वाज्जीवेऽविद्यासबधासभवात् । ब्रह्मण्यविद्यासबधस्वीकारे निर्विकारत्वहानिरज्ञत्व च । शबले तत्स्वीकारे चान्योन्याश्रय इति न किंचिदेतत् । मुक्तात्मनस्त्वन्मते ब्रह्म स्वरूपत्वेन ब्रह्मण्यविद्यासबधस्य स्वीकारे कथ न मुक्तात्मन ससारिता । यत्तु मायाया बहुत्वस्वीकारे स्वप्रतिपादितान् दोषान्निरीक्ष्य तत्पक्ष त्यक्त्वा मायाया एकत्वपक्षे मुक्तात्मनस्तद्विनाशयोरितरेषां दृष्ट्या विद्यमानत्वाच्चेत्यादिना एकत्वपक्षाश्रयण कृत तत्र विचार्यते मुक्तात्मपदेन शुद्ध ब्रह्म विवक्षित जीवन्मुक्तो वा नाद्य । ब्रह्मण्यविद्याया विद्य मानत्वादन्यथा सर्वजीवमोक्षप्रसग । ब्रह्मण्यविद्यासबध विना जीवभावस्यैव त्वन्मते-ऽभावात् नापि द्वितीय, जीवन्मुक्तेप्यविद्यालेशस्य प्रारब्धकर्महेतुभूतस्य त्वदीयैरस्वीकृत त्वात् । तत्राप्यविद्यानाशस्यासभवात्तथा च मुक्तात्मनस्तन्नाशोपीत्यसगतम् । किंचैकाविद्या-पक्षे शुक्तौ रजत पश्यता पुरुषाणा मध्ये एकस्य शुक्तिसाक्षात्कारेण तद्रजतनाशे इतरेषा दृष्ट्या तत्सत्त्वमित्यादिदृष्टान्तो न युज्यते । दशपुरुषभ्रमविषय नैक रजत किंतु रजतदशकम् । अत एव शुक्तिरजतस्य स्वप्नगजादिवदनन्यवेद्यत्वमुपपद्यते । उक्त चाप्पय्यदीक्षितेन यदीया ज्ञानोपादक यत्तत्तस्यैव प्रत्यक्ष स जीवातरस्यैवेत्यनन्यवेद्यत्व रजतस्येति । यद्रजत यत्पुरुषी-याज्ञानकल्पित तद्रजत तस्यैव पुरुषस्य प्रत्यक्षमिति तदर्थ । एव चानेकाविद्यापक्ष एवाय दृष्टान्त सम्यगुपपद्यते तत्र पुरुषभेदेन सृष्टेर्भिन्नत्वात्त्वत्त्वेकाविद्यापक्षे तद्दृष्टान्तस्य विषमत्वात् । एकाविद्यापक्षे मुक्तात्मनस्तदभावेपीत्यादिकथनमप्ययुक्तम् । तस्मिन् पक्षे ब्रह्मण एवाविद्यया जीवभाव । कौन्तेयस्य राधेयत्ववत् । तथा च त्वत्पक्षे मुक्तस्यापि

स्यमुक्ततुल्यत्वे वामदेवशुकादीनामप्युक्तत्वमनीकारेण तत्कथनस्यासंगतत्वात्तस्मात्स्व-मताज्ञानविजृंभितमेवेदं सर्वमिति संक्षेपः। इति सप्तमखंडखंडनाभासस्याभासत्वप्रदर्शनम्।
अथ ननु श्रुतियोधित इत्यारभ्य अग्रे वक्ष्याम इत्यंतोष्टमखंडखंडनाभासस्याभासत्वं प्रद-र्श्यते। तत्र 'बंधोस्याविद्ययानादि'रिति वाक्याज्जीवब्रह्मविभागस्यानादित्वं न संभवति, तत्र तृतीयाविरोधात्। तथा हि अविद्यायाः कारणत्वं बोध्यते, तच्च पूर्ववर्तित्वघटितम्, तथाच बंधस्यानादित्वे पूर्ववर्तित्वानुपपत्त्या तृतीयाविरोधः स्यात्तस्माद्यथा "अक्षय्यं ह वै चातुर्मास्य-याजिनः सुकृतं भवती"ति वाक्यस्थाऽक्षय्यपदस्य यथा प्रलयपर्यंतस्थायिपरत्वम्, तथात्रा-नादिपदस्यापि चिरंतनपरत्वमेव युक्तम्। नच जीवब्रह्मविभागोऽनादिरयं बुद्धिकृत इति वाच्यम्। तस्यानादित्वे बुद्धिकृतत्वे प्रमाणाभावात्। नहि तत्र प्रत्यक्षं प्रमाणं जीवभावस्य कल्पितत्वेन, तत्प्रत्यक्षस्यापि स्वाप्निकमायिकपुरुषप्रत्यक्षवत् प्रामाण्यायोगात्। अत एव नानुमानादिरपि, श्रुतयस्तु तत्र विस्फुलिंगव्युच्चरणं वदंत्यो ब्रह्मण्यप्ययं चाभिदधत्यो जीवब्रह्मविभागस्य सादित्वमेव बोधयंति। नच "न कर्माविभागादिति चेन्नानादित्वा"दिति सूत्रेण कर्मानादित्वबोधनेन विभागानादित्वमपि "पुण्यः पुण्येन कर्मणे"ति तद्विषयश्रुत्या बोधितमेवेति वाच्यम्, श्रुतौ सत्कर्मणा सदेहभवनमात्रबोधनेन विभागानादित्व-स्याबोधनात्। नच तत्र संसारानादित्वव्याख्यानं युज्यते। तथा सतीश्वरस्यानीश-त्वम्। "सदेव सौम्येदमग्र आसी" दित्यादिश्रुतिविरोधश्च, संसारहेतुभूताया अविद्याया जीवानां च सत्त्वात्। नच सा असतीति वक्तुं युक्तं तथा सति तया संसारा-भावापत्तिः। नापि सदसद्विलक्षणा। तथा सति ब्रह्मानतिरेकस्तस्याः स्यात्। ब्रह्मणः सदसद्विलक्षणतया 'अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यत' इत्यादिना गीतायां भगवता प्रतिपादितत्वात्। तस्मादनादित्वमप्रामाणिकमेव। नच विभागस्य सादित्वमनादित्वं वा आस्ताम्। परंतु विस्मृतकण्ठमणिन्यायेन विस्मृतस्वस्वरूपं ब्रह्मैव जीव इति जीवातिरिक्तं ब्रह्म नास्तीति वाच्यम्। "यः सर्वज्ञः सर्वविदि"त्यादिश्रुतिविरोधात्। एवं च भगवदधीनो भगवदिच्छया तिरोहितज्ञानानंदो जीव इति। "जीवेशावाभासे-न करोति मायाऽविद्या स्वयमेव भवती"ति श्रुतेरविद्याया जीवशक्तित्वमिति यत्तेनोक्तं तन्न सम्भवति, नहि कारणीभूता शक्तिः कार्यस्य सम्भवति। अन्यथा दाहहेतुवह्नि-निष्ठशक्तेरपि दाहशक्तित्वं स्यात्॥ यथा दाहानुकूलशक्तेर्वह्निशक्तित्वमेवं जीवानुकूल-शक्तेर्ब्रह्मशक्तित्वमेवेति (एतेन भगवदाराधकत्वेपि अविद्याया न जीवशक्तित्वविरोध) इत्यादिकं निरस्तम्॥ यत्तु तच्छक्तित्वेपि तदधीनोत्पत्तिकत्वं मायायां नास्तीत्युक्तवा मानाभावादित्युक्तं तदपि तुच्छम्, "इदं सर्वमसृजत" इति तैत्तिरीयश्रुतेरेव प्रमाणत्वात्॥ तत्रत्यभाष्ये "इदं सर्वं देशतः कालतो नाम्ना रूपेण च यथानुभवं सर्वप्राणिभिः सर्वत्रानुभूयमानमत्रासृजते"ति व्याख्यातम्। तथा च मायाया अप्यनुभूयमानतया कथं न तदधीनत्वम्। ग्राहकतर्काभावादित्यपि न सत्। विपक्षे वेदाप्रामाण्यापत्तेरेव बाधकत्वेन तस्यैवानुकूलतर्कत्वात्। शुकादीनां मुक्तत्वे तु पुराणादिवाक्यमेव प्रमाणम्। किंचेत्यादिना संसारस्य सादित्वे यवनतुल्यत्वापादनं यत्तदपि निराकारनिर्गुणब्रह्मस्वरूपवादिनामपि

तदंशे तुल्यत्वात्स्वमतानालोकनविजृंभितमेव। किंच, किंचिदंशमादाय तुल्यत्वप्रतिपादने सर्वेषां सर्वतुल्यत्वापत्तिः। गालिप्रदानादिकं त्वासुरधर्मत्वात्त्वय्येव शोभते। इत्यलमसदावेशेन। इत्यष्टमखंडखंडनाभासस्याभासत्वप्रदर्शनम्। अथान्यचेत्यादेर्नवमखंडखंडनाभासस्याभासत्वं प्रदर्श्यते (तत्र मायायां प्रतिबिंबत इत्यादिश्लोके मायायाः परिच्छिन्नत्वादि तत्र ब्रह्मप्रतिबिंबश्च प्रत्यपादि) त्याद्युक्तं तन्न युक्तम्। मायायाः परिच्छिन्नत्वेपि ब्रह्मणो विभुत्वात्तस्य परिच्छिन्ने प्रतीत्यसंभवात्। यथा जलगर्भसिकता स्वांतर्गतजले न प्रतिबिंबने तद्वत्। गगनदृष्टांतस्तु पूर्वमेव निरस्तः। "पादोस्य विश्वा भूतानी"ति श्रुतिस्तु ब्रह्मण एकदेशे सृष्टिरिति प्रतिपादयति, नतु ब्रह्मणो मायासंबंध एकदेशस्तीति तस्यार्थस्तत्र मायावाचकपदाभावात्। किंच प्रतिबिंबपक्षेऽविचारितरमणीये कथंचिद्दोषोद्धारेपि ब्रह्मैव स्वाविद्यया संसरति, कौंतेयस्यैव राधेयत्ववदविकृतस्यैव ब्रह्मणो जीवत्वमिति पक्षे त्वत्समते सर्वज्ञत्वविशिष्टपरमात्मनोऽसिद्धौ "यः सर्वज्ञः सर्ववि"दित्यादिश्रुत्युपप्लवो दुरुद्धर एवेति। किंच तादृशमते ईश्वरस्यापि स्वप्रकल्पितेश्वरतुल्यतया जीवानामपि स्वप्नदृष्टनिर्जीवपुरुषतुल्यतया सर्वनाश एव स्यात्। बिंबप्रतिबिंबभावमादाय भेदस्यापारमार्थिकत्वसाधनं तु षष्ठप्रपाठकस्थमृदादिदृष्टांतविरुद्धम्। नहि मृद्धटादीनां बिंबप्रतिबिंबभावेन किंचिदवच्छिन्नत्वेन वा औपाधिको भेदः संमतो येन त्वत्पक्षे तेषां दृष्टांतता स्यात्। यथा मृत्सुवर्णादीनामवस्थाविशेषो घटकुंडलादिस्तद्ब्रह्मणोवस्थाविशेष एव संसारो जीवादिरूप इति पक्षे तेषां दृष्टांतत्वं युज्यते। तस्मान्न बिंबप्रतिबिंबादिपक्षाः श्रुतिसंमताः। चतुर्थश्लोकव्याख्यायां च यत्किंचिदयोदितं तत्सर्वं तु तत्रैव दूषितं किं पुनः पिष्टपेषणेन। यत्तु "ऐतदात्म्यमिदं सर्व" मित्यत्र एतदात्मा यस्य सर्वस्य स एतदात्मेति बहुव्रीहिसमास प्रदर्श्य समभिव्याहृतसर्वपदार्थस्यान्यार्थताबोधनायैव यस्येति षष्ठ्यंतपदसमानविभक्तिकं सर्वस्येतिपदं तेन न सर्वमित्यस्य वैयर्थ्यमित्युक्तम्, तदप्ययुक्तं [sic] धृष्टः कोविदारानाचष्ट इति श्लोकप्रवादविषयसममेव। तत्र टीकाकारस्यायं प्रश्नः। एष आत्मा यस्य स एतदात्मा, तस्य भाव ऐतदात्म्यं, यद्येवं समासस्तदा सर्वपदस्य कथमन्वय इति वक्तव्यम्। यद्येतदात्मा यस्य सर्वस्य स सर्व इत्यत्र समासघटकांतपदलक्ष्यतावच्छेदकसमर्पकतया "वैश्वदेव्यामीक्षे"ति वाक्यघटकामीक्षापदवत्सर्वपदमप्युपयुज्यत इत्युच्यते चेत्स्यादेवं यद्येतदेव वाक्यं स्यात्, वर्तते तु ऐतदात्म्यमिति। तत्र सर्वपदस्यानन्वितार्थकतया वैयर्थ्यं दुर्वारमेव। नहि पीतमंबरं यस्य विष्णोः स पीताम्बरो विष्णुरित्यत्र भावे त्वप्रत्यये कृते पीताम्बरत्वं विष्णुरित्यत्र विष्णुपदस्यान्वययोग्यता। समासोत्तरभावप्रत्ययस्य संबंधबोधकत्वादत एवोक्तं "कृत्तद्धितसमासेभ्यो मतभेदनिबंधनम्। त्वतलोरर्थकथनं टीकायां हरिणा कृतम्।" त्वतलोरिति भावप्रत्ययमात्रोपलक्षण"मिति भूषणकारेण। तथा च समानविभक्तिकपदोपस्थाप्ययोरभेदान्वयस्यैव व्युत्पन्नत्वेन यथा पीतांबरत्वपदबोध्यसंबंधाभेदस्य विष्णौ बाधितत्वात्तादृशवाक्यस्याप्रामाण्यं, तथा ऐतदात्म्यं सर्वमित्यस्याप्रामाणिकत्वापत्तिस्त्वन्मते स्यात्तत्परिहारं वैश्वदेव्यामीक्षेति न्यायेन कुर्वनुपेक्ष्य एवास्मन्मते च एष आत्मा एतदात्मा तस्य

भाव ऐतदात्म्यं एतत्संबंध इति यावत्। संबंधस्यवस्थाविशेषरूप एव, स च सर्वस्मिन्नयाधित एव, शुद्धस्य ब्रह्मण एव लीलया जगद्रूपेणांगीकारात्। एतेन भावार्थकप्रत्ययार्थेत्वान्वयानुपपत्तिरिति परास्तम्। त्वन्मते भावार्थकप्रत्ययार्थान्वयानुपपत्तिरन्वैव॥ तत्सत्यमित्यत्र तच्छब्देन पूर्वोक्तं यत्तेजोबन्नादि तस्य सत्यत्वं प्रतिपाद्यते। नच तच्छब्देन कारणमेव गृह्यते प्रकरणात्तु कार्यं मानाभावादिति वाच्यम्। एवं सति "तेज ऐक्षत बहुस्यां प्रजायेय तदपोऽसृज" दित्यत्रापि तच्छब्देन ब्रह्मण एव परामर्शापत्तेः। किंच तच्छब्दस्य प्रक्रान्तवाचित्वमेवेति नियमो नास्ति। किंतु बुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नवाचकत्वम्। अत एवानुगतधर्मावच्छिन्नवाचकत्वान्न नानार्थकत्वम्। किंच तच्छब्देन कारणस्य परामर्शे तस्य सत्यत्वं "सदेव सौम्येदमग्र आसी"दिति श्रुतिघटकसच्छब्देनैव ज्ञातं, पुनस्तत्सत्यमित्यादिना तस्यैव परामर्शं तच्छब्देन कृत्वा तस्य सत्यत्वप्रतिपादने पौनरुक्त्यापत्तिः। कार्यस्य सत्यत्वे तु वैनाशिकाद्वैवैनाशिकमायावादिनो विप्रतिपन्नास्तन्मतनिरासार्थं तत्सत्यमित्यनेन तस्य सत्यत्वप्रतिपादनं सार्थकम्। नचैवमपि पूर्वोक्तसर्वशब्देन जडस्यैव ग्रहणे किं मानम्। चिदचित्समुदायस्यैव कुतो न ग्रहणमिति वाच्यम्, इदंशब्दस्य प्रत्यक्षबुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नवाचकत्वात्। चेतनस्य प्रत्यक्षबुद्धिविषयत्वाभावात्। जडजातस्यैवेदमिति बुद्धिविषयत्वादत एव तस्य प्रत्यक्षत्वमपि संगच्छते। तस्मात्सर्वशब्देन संकुचितवृत्तिना जडमेव प्रतिपाद्यते नतु चेतनमपि, तस्य 'तत्त्वमसी'त्यनेन प्रतिपाद्यत्वात्। यच्च (स आत्मेत्यत्रापि कार्यस्य तच्छब्देन ग्रहणे तत्त्वमसीत्यत्रापि तस्यैव ग्रहणं स्यात् कारणप्रकरणस्य विच्छेदा) दित्युक्तं तदपि स्वमतमनवलोक्यैव, त्वन्मतेपि 'तदपोऽसृजत्' इत्यादौ तच्छब्दे कार्यस्य ग्रहणेन प्रकरणविच्छेदात्तत्सत्यं तत्त्वमसीत्यादौ कार्यस्यैव ग्रहणं कुतो न स्यात्, यदि च तच्छब्दस्य बुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नवाचकत्वान्न दोष इत्युच्यते, तदा तुल्यं प्रकृतेपि। ननु तदादिसर्वनाम्नां बुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नवाचकत्वेपि हर्यादिपदवन्नानार्थकत्वं स्यात्। साक्षात्परंपरयाऽवच्छेदकैक्य एव शक्तेरैक्यनियमादन्यथा नानार्थमात्रोच्छेदप्रसंग इतिचेन्न, तच्छब्दो बुद्धिप्रकारावच्छिन्नं बोधयत्वित्याकारकभगवत्संकेतेन घटत्वपटत्वादिधर्माणामनुगतेन बुद्धिविषयतावच्छेदकत्वेनैव विषयीकृतत्वात्तस्य न नानार्थकत्वम्। हर्यादिपदेषु तु गोत्वेंद्रत्वविष्णुत्वादीनां संकेतेन स्वरूपत एवावगाहनान्नानार्थकत्वोपपत्तिः। एवं च यत्पदशक्तावनुगतधर्मेण शक्यतावच्छेदकानां न भानं तत्पदस्यैव नानार्थकत्वमधिकमन्यत्र विस्तरेणोक्तम्। प्रकृतमनुसरामः। एवं च प्रकरणविच्छेदेपि तच्छब्देन कारणपरामर्शात्तत्त्वमसीत्यादौ कारणस्यैव ग्रहणात्"तस्याचिरस्य मोक्षोपदेशात्" "हेयत्वावचनाच्चे" ति सूत्रयोर्विरोधः। यदपि (ब्रह्मणः सर्वकार्यात्मकत्वे तद्वदसत्त्वशंका प्रसक्ता सा तत्सत्यमित्यनेन निवारिता) इत्युक्तं तदपि तुच्छम्। ब्रह्मणोऽविकृतस्य सर्वकार्यात्मकत्वश्रवणेन कारणस्य सत्यतायां सदेवेत्यादिवाक्यैः श्रुतायां मृल्लोहदृष्टांतैर्निश्चितायां संदेहानुदयेन त्वादृशानां वैनाशिकानां च वाक्यात् कार्यस्यानित्यत्वसन्देहे तत्सत्यमित्यनेन तस्य परामर्शो युज्यते। ततश्च

कार्यनित्यत्वनिश्चयः। नच कार्यस्य सत्यत्वं प्रतिविपादयिषितं चेदिदंशब्दमेव सन्निकृष्टपरामर्शकं प्रयुञ्जीत तस्य सन्निकृष्टत्वान्न तु तच्छब्दमिति वाच्यम्, कारणपरामर्शेपि तद्दोपस्य तुल्यत्वात्कारणस्यापि "य एषोणिमैतदात्म्य"मित्यादिना पूर्वं प्रतिपादितत्वेन तस्यापि सन्निकृष्टत्वात्। एवं च कार्यस्य नित्यत्वाज्जाशोत्पत्त्योरसंभवेनाविर्भावतिरोभावावेव श्रुतिसंमतौ। स आत्मेत्यादिवाक्यस्य तत्त्वमसीत्यादिप्रतिपाद्येर्थेऽसंभावनानिवृत्त्यर्थं यत्तदुक्तं तदपि स्वमताज्ञानात्। नहि त्वन्मते स आत्मेति श्रवणेनैवासंभावना निवर्तते किंतु मनननिदिध्यासनाभ्यामन्यथा तावन्मात्रेणैवासंभावनादिनिवृत्तौ मंतव्य इत्यादिना तयोर्विधानं निरर्थकमापद्येत। वस्तुतस्तु तस्य भावस्तत्त्वं तदंश इति यावत्। तत्त्वमसि तदात्मकस्तदंशो वाऽसि। ननु त्वंपदाध्याहारेऽतिगौरवमिति चेद् भ्रांतोसि। नहि मध्यमपुरुषे युष्मच्छब्दप्रयोगो नियतो येन गौरवं, अत एवोक्तं "युष्मदि प्रयुज्यमानेऽप्रयुज्यमाने च मध्यम" इति। भावप्रत्ययानन्वयस्तु ऐतदात्म्यमित्यत्र त्वन्मतेप्युक्त एवेत्यलं विस्तरेण। इति नवमखंडखंडनाभासस्याभासत्वप्रदर्शनम्। अथ नन्वाविर्भावतिरोभाव इत्यादिर्दशमखंडखंडनाभासस्याभासत्वं प्रदर्श्यते। तत्र प्रथमं तत्रेत्यादिना टीकाकृदुक्तं किंचिदनूद्य तत्र स्वयं दोषानुद्भावयितुमशक्तो विद्वन्मंडने नन्वित्यादिनोद्भावितान् दोषान् (तौ चेद्वस्तुसत्त्वात्स्थितौ कुतो नातीतादेश्चाक्षुषत्वं युगपत्सकलोपलंभश्च तत्त्वयानंत्ययोरन्यतरच वस्तुनो घटादेः सत्त्वस्य सर्वदांगीकारा) दित्यादि नो चेत्तदुत्तरं तत्रोच्यत इत्यादिना तत्रैव यद्यप्युक्तं तथापि किंचिदुच्यते। उत्पत्तेः पूर्वं घटादीनां सत्त्वं त्वयाभ्युपगम्यते नवेति, प्रथमे सिद्धं नः समीहितम्। द्वितीये घटो भविष्यतीतिव्यवहारानुपपत्तिः। भविष्यत्त्वस्य धर्मत्वेन धर्मिणं विनाऽसत्त्वात्। धर्मस्य धर्मिवृत्तित्वनियमादन्यथा तस्य धर्मत्वानुपपत्तिः॥ नच धर्मधर्मिसंबंधमात्रमनिर्वचनीयतया व्याप्तेरसिद्धिरिति वाच्यम्। अनिर्वचनीयत्वस्य व्याप्त्यसिद्धिप्रयोजकत्वे जगन्मिथ्यात्वसाधकानुमाने विपक्षसाध्यहेत्वादीनामनिर्वचनीयत्वस्य त्वयाभ्युपगतव्यतया तेषामसिद्ध्या व्याप्त्यसिद्ध्या मिथ्यात्वमपि त्वदभिमतं न सिध्येदिति। किंच पदार्थानामनिर्वचनीयत्वं त्वया युक्त्या साध्यते श्रुत्या वा नाद्यः, युक्तेरुपपत्तिरूपाया व्याप्त्यनतिरेकात्। तस्याश्च धर्मिधर्मसंबंधघटितत्वेन तेषां त्वन्मतेऽसिद्ध्या कथं तद्घटितव्याप्त्याऽनिर्वचनीयत्वसिद्धिः। नापि द्वितीयः, जगदनिर्वचनीयमित्याकारिकायाः श्रुतेरदर्शनात्। प्रत्युत "सदेव सौम्येदमग्र आसी" दित्यादिश्रुतेरिदंशब्दप्रतिपाद्यस्य जगद्भिन्नत्वं प्रतिपाद्यते। नच कारणात्मना सत्त्वं पूर्वमपि, न स्वरूपेणेति वाच्यम्। भवतु तावदेवं केनापि रूपेण सत्त्वं तावत्यधिकं त्विति न्यायेन सत्त्वं तु नावैनि। एवं च सत्त्वं पूर्वमपि श्रुतिसिद्धं त्वयाप्यंगीकृतम्। तत्र भावित्वमपि स्वीकर्तव्यमन्यथा सृष्टिकाल आसीदिति प्रयोगानुपपत्तिः। तथा च भावित्वभूतत्ववर्तमानत्वाश्रय एक एव घटः सिद्धः। किंच सर्वमनिर्वचनीयमिति वदता ब्रह्मापि कुतो नानिर्वचनीयमुच्यते। यथा धर्मधर्म्यादीनां निरुक्तिरशक्या, एवं ब्रह्मणो निरुक्तिः कर्तुं न शक्यते। इष्टापत्तिरिति चेत्तस्याप्यसिद्धिः स्यात्। नच ब्रह्मणो वेदे सत्यतया प्रतिपादनात्तस्यानिर्वचनीयत्वमिति वाच्यम्। यदि वेदस्य प्रामाण्यं त्वयाभ्युपगतं चेत्तत्सत्यमित्यादिना वेदेन प्रतिपादिते

जगत्सत्यत्वे किमिति विद्वेष । एवं च जगत सत्यत्वात् तस्य कारणात्मना सत्त्वं तिरोभाव , स्वरूपेण सत्त्वमाविर्भाव । तत्र जात्या प्रलयस्थाने तु स्वन्मतेपि तथैव पर्यनुयोगे मूकतैव स्यात् । एतेन श्रुत्यनुसारादनिर्वचनीयवादोऽभ्युपगम्यतामिति प्रलपितमपास्तम् । अनिर्वचनीयवादस्य श्रुत्यनुसारित्वाभावात् । यत्तु किंचेत्यादिना भावित्वाभावमात्रेण कथं घटादे सत्त्वं सिकतासु तैलस्य भावित्वाभावेपि सत्त्वाभावादित्युक्त तदप्यज्ञानात् । नहि भावित्वाभावेन घटादे सत्त्वं साध्यते । किंतु भावित्व धर्मिनिष्ठं धर्मत्वाद्रदत्ववदित्यनुमानेन सामान्यतो दृष्टेन तस्य धर्मिवृत्तित्वं प्रसाध्य कपालकालादिरूपधर्मिवृत्तित्वबाधात् परिशेषानुमानेन तस्य घटादिवृत्तित्वं साध्यते । परिशेषश्च प्रसक्तप्रतिषेधेन्यत्राप्रसक्तौ परिशिष्यमाणे सम्प्रत्यय । तथा च प्रयोग भावित्वं घटपटादिवृत्ति घटाद्यतिरिक्तावृत्तित्वे सति धर्मत्वात्, यन्नैवम् तन्नैवम् । एवं चाज्ञानादेव दोषोद्भावनमिदम् । यदपि ( सर्वस्य ब्रह्मरूपतया ब्रह्मण सर्वान्तर्गतकालोपाधौ सर्ववैशिष्ट्य धीर्दुर्वारे ) त्याद्युक्तम् । तत्र कालोपाधौ केन सबधेन सर्ववत्त्वबुद्धिरापाद्यते । कालिकेन उपादानोपादेयभावनियामकेन स्वरूपविशेषेण वा, आद्य इष्टापत्ति । इदानीं घट इदानीं पट इत्यादिप्रतीते सर्वसमतत्वात् । ब्रह्मण सर्वाधारतयेत्यादेरनुपयोगश्च । द्वितीये तु ब्रह्मण सर्वोपादानत्वेपि कालाद्यात्मना न तस्योपादानत्वम्, किंत्वविकृतस्यैवेति न तद्विशिष्टबुद्धिरिति सक्षेप । इति दशमखडखडनाभासस्याभासत्वप्रदर्शनम् । अथ ननु मम यथेत्यादेरेकादशखडखण्डनाभासस्याभासत्व प्रदर्श्यते । ( तत्र प्रमाणान्तरबाधेपि घटादेर्भूतादिव्यवहारश्चेत् स्वत सिद्धप्रामाण्यश्रुतिबलादङ्गीक्रियते तर्हि युगपद्भूतभाविव्यवहारावापद्येतां विनिगमकाभावादित्यादिना दोष उद्भावित ) सोप्यस्थाने । नहि तथा हीत्यादिनोक्तवाक्येन घटादौ भूतादिव्यवहार उपपादित । किंतु घटादौ ब्रह्मात्मकतया भूतत्वादिधर्मवत्त्वम् । अत एवोपसहारे घटादिषु तदात्मकत्वस्य न विरुद्धमित्यादि कथनमपि सगच्छते । "यद्भूत यच्च भव्य" मित्यादिश्रुत्यापि भूतभाविपदार्थस्य पृथक्त्वेन ब्रह्मरूपत्वप्रतिपादनादेकस्मिन्नेककालावच्छेदेन तादृशव्यवहारो युगपच्च जायत इति गम्यते । अन्यथा "पुरुष एवेद सर्वं" मित्येतावतैव सिद्धे भूतभव्ययो पुनर्ग्रहण व्यर्थमेव स्यात् । यथैकस्मिन्नेव शरीरे वृद्धत्वयौवनबाल्यत्वादीना परस्परविरुद्धाना सत्वेपि न युगपत्तेषा व्यवहारो नापि विरोधोच्छेदस्तथैव प्रकृतेपि । न च बाल्ये यच्छरीर तन्न यौवने किंतु भिन्नमेवेति वाच्यम् । क्षणभगवादप्रसगात् । "देहिनोस्मिन्यथा देहे कौमार यौवन जरे" त्यादिभगवद्वाक्यविरोधश्च । किंच "स्वाप्यया" दिति सूत्र तत्सूत्रशारीरभाष्यानुरोधेन जीवस्य सुषुप्तौ विलीनत्वमवश्य स्वीकरणीय त्वयापि, तथा च प्रबुद्धेपि तस्मिंस्तथाव्यवहार कुतो न स्यात् । एव च जाग्रदाद्यवस्थात्रय जीवस्येति स्वीकुर्वतस्तत्र यथा युगपद्व्यवहारो नैकस्मिन्नेककालावच्छेदेन तथैव भावित्वभूतत्ववर्तमानत्वादीनामेकस्मिन्नेककालावच्छेदेन न व्यवहार । यदि चेत्यादिना ( भूताद्यभिन्नतया घटादौ भूतादिव्यवहारस्तदभिन्नाभिन्न इति न्यायात्तर्हि तेनैव न्यायेन तस्मिन् पटादिव्यवहारोप्यस्तिव ) त्यादिदोषोद्भावन, तन्न साधीय । कारणस्वरूपलक्षणस्य कारणाभि-

सस्य तदभिन्नाभिन्न इति न्यायेन कार्याभिन्नत्वम्। यथा गंधवदभिन्नपृथिव्यभिन्नघटादे,
गंधवदभिन्नत्वं ननु कार्याभिन्नकारणाभिन्नद्वितीयकार्यस्य तत्कार्याभिन्नत्वम्, सर्वव्यव-
हारसंकरप्रसङ्गात्। किंच यथा घटाद्यात्मनाविर्भूताया मृदो न पटाद्यात्मनाविर्भूतत्वं-
गंधाद्यात्मनाविर्भूतायास्तु घटपटाद्यात्मनाविर्भूतत्वमत एव सर्वत्र पार्थिवेषु गंधव्यवहारो, न
तु घटे पटस्य पटे घटस्य वा व्यवहारः। एवमेव घटाद्यात्मनाविर्भूतस्य ब्रह्मणः पटाद्यात्मना-
नाविर्भूतत्वान्न घटादिषु पटादिव्यवहारः। अत एव सच्चिदानंदात्मकत्वेपि ब्रह्मणस्तत्कार्येषु
घटादिषु न चिद्व्यवहारो, घटाद्यात्मना सदात्मकस्यैवाविर्भूतत्वात्, स्वीकर्तव्यश्च
त्वयाप्ययमेव परिहारोन्यथा त्वन्मतेपि सदाद्यात्मकब्रह्माभिन्नत्वेन घटादिषु यथा सद्व्यव-
हारस्तथा पटव्यवहारोपि दुर्वार एव स्यात्। नचास्मन्मते पटादेर्मायिकत्वान्न ब्रह्मात्मकत्व-
मिति वाच्यम्। "पुरुष एवेदं सर्वं" "सर्वं खल्विदं ब्रह्म" त्यादिश्रुतिविरोधापत्तेः। किंच
मायिकत्वेपि स्वभिन्नमायाभिन्नत्वे घटे पटत्वव्यवहारोऽशक्यपरिहार एव। यदपि यदा
यस्मिन्नित्यादिपंक्ताविव्याद्युक्त्वा (व्यवहाराणां च नित्यत्वात्कालिकनियमाभावोक्तिरयुक्ता।
किंच यदा भूतत्वादिविरोधात्मकतत्सत्त्वं नांगीकृतं तदा स्वप्नादिसत्त्ववद्घटादिसत्त्वं
निर्मान) मित्यादि प्रलपितं तदपि मंदम्। घटादीनां कारणात्मना सत्तावत्त्वेपि कार्यात्मना
सर्वदा सत्त्वाभावात्कालिकनियमाभावोक्तिरसंगता। स्वप्नादिसत्त्ववद्घटादिसत्त्वमिति तु
रिक्तं वचः। यदि घटादिसत्त्वं स्वाप्निकपदार्थसत्त्वतुल्यं स्यात्तदा "वैधर्म्याच्च न स्वप्नादिव"
दिति व्याससूत्रं विरुद्धं स्यात्। स्याच्च "मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वा"
दिति सूत्रेण स्वप्नस्यैव मायात्वप्रतिपादनं विरुद्धम्। जाग्रत्पदार्थानामपि त्वदुक्तरीत्या
मायामात्रत्वात्। किंच यदि घटादिसत्त्वं निर्मानं स्यात्तदा "कथमसतः सज्जायेत" इति
श्रुतौ सत्पदेन घटादीनां ग्रहणं न स्यात्। नह्यसत्यस्य सत्पदेन ग्रहणं संभवति तस्माच्छ्रुति-
सूत्रविरुद्धं वदन्नुपेक्ष्य एव। एतेन किं चास्तु पृथिव्यादौ मायया जागरे गंधः स्वप्ने तथा
दृष्टत्वा) दित्यादिकं निरस्तम्। किंच तन्मते मायाश्रयत्वैव मायिकाश्रयत्वेन पृथि-
व्यादेर्मायाश्रयत्वाभावेन शुद्धचैतन्यस्यैव त्वन्मते मायाश्रयत्वेन तस्यैव मायिकपदार्था-
श्रयत्वात्पृथिव्यां मायया‌ऽस्तु गंध इत्युक्तिस्त्वन्मतविरुद्धा। उक्तं च संक्षेपशारीरके—
"आश्रयत्वविषयत्वभागिनि निर्विभागचितिरेव केवला। पूर्वसिद्धतमसस्तु पश्चिमो नाश्रयो
भवति नापि गोचर" इति॥ यत्तु ("पुरुष एवेदं सर्व" मित्यत्रेदंशब्दसमानाधिकरण
सर्वशब्दार्थ एव यच्छब्दसमानाधिकरणाभ्यां भूतशब्दभव्यशब्दाभ्यां निर्दिश्यत) इत्या-
द्युक्त्वा (सर्वनाम्नां बुद्धिविषयधर्मोपलक्षितबोधकताया एव सत्त्वा) दित्युक्तं, तत्तुच्छम्,
यन्मम गृहे यच्च मद्भ्रातृगृह इत्यादिदृष्टांतेन यदि "पुरुष एवेदं सर्वं यद्भूतं यच्च भव्य"
मितिवाक्ये भूतभव्ययोरिदंशब्दार्थसमानाधिकरणसर्वशब्दार्थत्वं प्रतिपाद्येत, तदा
भूतभव्ययोः पुरुषरूपत्वेपि वर्तमानस्य पुरुषरूपत्वं न सिद्ध्येत्। सर्वशब्दस्य संकुचित-
रूपत्वात् तत्रैवेदं सर्वमित्यादिवाक्येन यथा स्वगृहस्थधने स्वभ्रातृगृहस्थधने सर्वबोध्य
संबंधबोधने स्वपितृधने तत्संबंधो न बोध्यते तद्वदत्रापि वर्तमानस्य पुरुषरूपत्वबोधा-
संभवात्। सर्वनाम्नामपि सर्वेषां बुद्धिविषयधर्मोपलक्षितधर्मावच्छिन्ने न शक्तिः, किं

यत्तदोरेव । एवं च सर्वशब्दशक्त्यभिप्रायेण बुद्धिविषयवाचकत्वकथन तादृशपदशक्त्य-ज्ञानादेव । सर्वशब्दस्य तूद्देश्यवाचकपदसमानाधिकरणस्य उद्देश्यतावच्छेदकव्यापक विधेयव्याप्यापर्याप्तिकधर्मावच्छिन्ने शक्ति । सर्वे ब्राह्मणा पूज्या इत्यादौ ब्राह्मणत्वव्यापक पूज्यत्वव्याप्ययावत्त्वावच्छिन्ना ब्राह्मणा इति बोध । अत एव सर्वे ब्राह्मणा वेदपाठका इति प्रयोगस्याप्रामाण्य सगच्छते । ब्राह्मणत्वव्यापकयावत्त्वस्य वेदपाठकत्वव्याप्यत्वा-भावात् । यदि बुद्धिविषयत्वोपलक्षितधर्मावच्छिन्नवाचकत्व सर्वशब्दस्य स्यात्तदा ते घटा नीलरूपवत इतिवत्सर्वे घटा नीलरूपवत इति वाक्यस्यापि प्रामाण्य स्यात् । अस्मन्मते च नीलरूपवत्त्वव्याप्ययावत्त्वस्य घटत्वव्यापकत्वाभावाद्घटत्वव्यापकस्य च नीलरूपवत्त्व-व्याप्यत्वाभावान्न तथा प्रामाण्य, बुद्धिविषयत्वावच्छिन्नाना यत्किंचिद्रूपावच्छिन्नाना च घटव्यक्तीना नीलरूपवत्त्वस्याबाधितत्वाच्च ते घटा रूपवत इति वाक्यस्य प्रामाण्योपपत्ति । न च घटे सर्वाणि रूपाणीत्यादिवाक्यस्य प्रामाण्यापत्ति , घटत्वव्यापकत्वरूपयावत्त्ववत्ताया घटेऽबाधितत्वादिति वाच्यम्, अत्र सर्वपदस्य विधेयवाचकपदसमानाधिकरणत्वात् तादृशसर्वपदस्य च विधेयतावच्छेदकव्यापकोद्देश्यव्याप्यापर्याप्तिकधर्मावच्छिन्नवाचक-त्वात्। रूपत्वव्यापकाधेयतासबधेन घटत्वव्याप्यधर्मस्य ततो बोध । एव च रूपत्वव्या-पकस्य यावत्त्वस्य घटत्वव्याप्यत्वाभावात्तादृशवाक्यस्याप्रामाण्यम् । नचैवमननुगम इति वाच्यम् । स्वार्थान्वयितावच्छेदकधर्मव्यापकतदन्वयितावच्छेदकधर्मव्याप्यपर्याप्तिकधर्मा-वच्छिन्ने सर्वशब्दस्य शक्तेर्विवक्षणान्न कोपि दोष इति दिक् । यरित्यादिना टीकाकारोक्त गीतावचनमुपक्रम्य (उत्तमागाना चूर्णितत्वेन ज्ञाने स्वमादिध्विव मायया भाविनोपि चूर्णितत्वस्य वर्तमानतया च ज्ञाने बाधकाभावा) दित्युक्त तदप्यज्ञानात् । "केचिद्विलग्ना दशनान्तरेषु सदृश्यते चूर्णितैरुत्तमागै"रित्यादिनार्जुनेन भगवद्रूपस्य वर्णन कृत तद्यदि मायिक स्यात्तदा तद्दर्शनार्थं "दिव्य ददामि ते चक्षुरि"ति वाक्योक्तदिव्यचक्षुर्दानस्य वैयर्थ्यं स्यात् । त्वन्मतसिद्धस्य श्रीकृष्णमायिकरूपस्थानेन चक्षुपाऽर्जुनेन सदैव दृष्टत्वात्तद्रूप-त्वात्तस्मिन् रूप आधिक्याभावात् । तदर्थमपूर्वप्रयासस्तस्य चातिप्रशसा व्यर्था स्यात् । एव च तत्रैव ध्वस्तवर्तमानत्वयोरेककालावच्छेदेन दर्शनेन तत्र न विरोधनियम । अयमेव विरोधनियमाभाव आश्रमवासिके पर्वणि गाधार्यै प्रति व्यासेनोक्त । एतेन (तथा चोक्तमित्यत्र वच किं कर्म ) ति निरस्तम् । यत्तु आश्रमवासिकेतिहासाद्युद्धे मृताना तेषा तत्पत्न्यादीना चात्रशिष्टकर्मत्वेन व्यासप्रसादगगास्नानादिभिर्मायिकशरीरो-त्पत्ति स्वम्नर ) दिति प्रलपित तदपि मदम् । मायिकस्य व्यामोहहेतुत्वेन गगास्नान-व्यासप्रसादयोर्व्यामोहजनकत्वापत्तिश्च स्यात् । कर्मणामपि त्वन्मते मायिकत्वात् अवि-प्रणाश इत्यसगत, मायिकस्य विनाशित्वात् । अविनाशित्वस्य सर्वकर्मनाशाभावार्थकत्वं तात्पर्यग्राहकाभावान्न युज्यते । नित्यानित्यस्याविच्छिन्नप्रवाहकाणीत्यर्थोपि त्वन्मते न सगच्छते । कर्मप्रवाहकस्य ज्ञाननाश्यत्वाभ्युपगमात् "भूतानामात्मभावो यो ध्रुवोऽसौ सप्रजानता"मिति श्लोकस्य भूतपदस्यात्मभावपदस्य च टीकोक्तमर्थं हेय इत्यादिना परित्यज्य भूताना जीवानामित्यर्थं कुर्वन् वक्तव्य , ननु अत्र भूतपद त्वन्मतसिद्धपारमा

र्थिकजीववाचक व्यावहारिकजीववाचक वा, नाद्य तस्य ब्रह्मरूपत्वेन जीवानामितिनिर्वचनस्यासगत्यापत्ति , सम्रज्ञानतामिति विशेषणमप्यसगत व्यावर्त्याभावात् । नापि द्वितीय तस्य शरीरत्रितयातिरिक्तस्य वक्तुमशक्यत्वेन घटकुड्यभिभातन्यायेन स एवार्थ पर्यवस्येत । अदर्शनादापतित इति श्लोके अदर्शनादित्यर्थमुक्त्वा ( स एवादर्शन लोप परस्यार्थश्चानालोचन इति पाणिनीसूत्रे सगत ) इत्युक्त तदपि न किंचित् । दर्शनज्ञानसामान्यार्थकत्वाभावात् । अन्यथा वेदोदितस्वर्गविषयकशाब्दज्ञानवति पुंस्ये प्रयुक्तस्याय स्वर्गं न पश्यतीति वाक्यस्याप्रामाण्यापत्ते । घट जानाति घट पश्यतीति वाक्ययोरविलक्षणबोधजनकत्वापत्तेश्च । 'अदर्शन लोप' इति सूत्रे तु उच्चारणकृतसत्ताऽभावपरत्वमदर्शनशब्दस्य लक्षणया बोध्यम् ॥ अत एव शेखरे "ज्ञानस्यावर्जनीयत्वेन तत्मात्रमयतर्गता उच्चारणसत्ता निषिध्यत" इत्युक्तम् । किंच दर्शनज्ञानसामान्यार्थकत्वेपि नादर्शनपदान्मायारूपाज्ञानस्य त्वदभिमतस्य लाभ । तस्य त्वन्मते भावरूपत्वात् ज्ञानसामान्याभावार्थकत्वे तु अहमज्ञ इत्याद्यनुभवस्य तत्साधकत्वेनाभ्युपगतस्य विरोध इत्यन्यत्र विस्तर । एतेन मायाया एव तादृशशक्तिकत्वाच्चेत्यादिक सर्वमपास्त वेदितव्यम् । किंच तेषा यदि मायया शरीरातर चेत्तैर्व्यवहृतवतीना पतिव्रताना पातिव्रत्यहानिर्दुर्वारैव । न च प्रत्यभिज्ञानान्न दोष इति वाच्यम् । मायया जाल्धररूपेण कृत वता विष्णुना सह व्यवहृतवत्या वृन्दाया पातिव्रत्यहानिस्तथा सति न स्यात् । तत्रापि स एवाय मम पतिरिति प्रत्यभिज्ञाया सत्त्वात् । नच व्यावहारिकात्मैक्ये सतीति विशेषणान्न दोष इति वाच्यम् ॥ पूर्व मृतेन द्वितीयजन्मन्यवाप्तसामर्थ्येन पूर्वरूप धृतवता पत्या सह विहारे पतिव्रताया पातिव्रत्यभगानापत्ते । तस्मादीश्वरेच्छाया एव नियामकत्व नान्यस्य कस्यापीति । इत्येकादशखण्डखण्डनाभासस्याभासत्वप्रदर्शनम् ॥ अथ लोकविरुद्धविविधेच्छानामित्यादेर्द्वादशखण्डखण्डनाभासस्याभासत्व प्रदर्श्यते ॥ (फलबलेन कल्पनातो मायिकत्वकल्पना लघ्व्युचिते ) त्यादिना मायिकत्वे लाघव न्यायप्राप्तत्व दोषाभावश्चोक्त । तत्रेद वक्तव्यम् । भगवदिच्छातो मायाया किं लाघव, यदि चेच्छाऽनेकविधा माया त्वेकविधेति तु मायाया एकविधत्वे जीवेशयोर्भेद किंकृतो येन तस्याल्पज्ञत्वमीश्वरस्य च सर्वज्ञत्वम् । नन्वेकैव मायाऽविद्याभेदेन द्विविधा तथाप्यनेकविधेच्छाकल्पनापेक्षया लाघव जीवेश्वरयो र्भेदश्च सिद्ध इति चेत्तर्हि जीवोपाध्यज्ञानात् घटावरकमज्ञान भिन्नमभिन्न वा । आद्ये पटावरकमपि भिन्नमेवाङ्गीकरणीयमन्यथा घटाकारवृत्त्या घटावरकाज्ञाननाशे पटावारककस्यापि नाशसभवेन सार्वज्ञ्यापत्ति स्यात् । तथा च प्रतिपदार्थमज्ञानकल्पनेऽनन्ताज्ञानकल्पनागौरव तवैव स्यादिच्छा तु "बहुस्या प्रजायेये" त्यादिश्रुतिप्रामाण्यादुभयमतसम्मतैवेति । द्वितीये तु घटादिज्ञानेन घटावरकाज्ञाननाशसमकाल एव जीवोपाध्यज्ञाननिवृत्तौ मोक्षप्रसग इति सक्षेप । वस्तुसत्त्वस्यानागतातीतकालेनाभ्युपगमे "अनागतमतीत च वर्तमानमतीन्द्रियम् । विप्रकृष्ट व्यवहित सम्यक् पश्यन्ति योगिन " इति वाक्यविरोधश्च । न च तत्रार्षज्ञानमेव दर्शनार्थ इति वाच्यम्, अतीतानागतवस्तुनोऽसत्त्वे तस्य शशशृङ्गायमाणत्वादार्षज्ञानमपि दुर्लभ स्यात् । अन्यथा योगिना खपुष्पादिविषयक सम्यक् ज्ञानमपि कुतो नोक्तम् । कादाचित्क सत्त्व तु पाटच्चरलुण्ठिते वेश्मनि यामिकजागरणमनुकरोति ।

एव च सर्वदा सिद्धौ सत्यमिद कार्यमेवं भवत्वितीच्छाविषयत्वमप्याविर्भावस्य लक्षणं सभवति । नचात्रैवपद निरर्थकमिद कार्यमितीच्छाया सप्रकारकस्यैव ग्रहणादिति शकनीयम्, इद कार्यमित्यत्र कार्यपदस्य नित्यत्वस्त्वाविर्भाववैलक्षण्यद्योतकत्वेपि एवपद प्रतिपाद्याया कारणावस्थायास्तत्सामग्रीसमवधानकालाव्यवहितोत्तराविर्भूतरूपायास्ततो लाभासभवेन तल्लाभार्थमेवपदस्यावश्यकत्वेन वैयर्थ्यासभवात् । न भवत्वितीच्छाविषयत्व तिरोभाव । नन्वस्य तिरोभावलक्षणत्वे तादृशेच्छाविषयत्वस्य देशेपि सत्त्वेन तद्देशस्यापि तिरोभाव स्यादिति चेन्न, ईश्वरेच्छाया तद्देशवृत्तित्वप्रकारतानिरूपितविशेष्यत्वस्य विवक्षितत्वेन तद्देशे तादृशविशेष्यत्वासत्त्वेन दोषाभावात् । एतेनैतयो स्नेहो नश्य त्वितीच्छाया पुरुषद्वयस्यापि नाशापत्तिरिति परास्तम् । तस्येच्छीयतादृशविशेष्यताश्रयत्वाभावात् । नन्वेवमपि आविर्भावलक्षणघटक कालो निर्विशेष सविशेषो वा नाद्य, युगपत्सर्वोपलभप्रसगात् । नापि द्वितीय विशेषाणा नित्यत्वे पूर्वोक्तदोषानुद्धारोऽनित्यत्वेऽपसिद्धातस्तद्विषयकेच्छातरकल्पनेनवस्थाप्रसग इति चेन्मैवम्, सविशेषकालविवक्षणेनुपपत्त्यभावात् । विशेषाणा नित्यत्वेप्याविर्भूतानामेवेदशब्दप्रतिपाद्यत्वेनाविर्भूत विशेषणविशिष्टकालस्यैवेच्छाघटकत्वान्नानुपपत्ति । नचाप्यपसिद्धात, कारणात्मनैव नित्यत्वाभ्युपगमादाविर्भूतत्वविशिष्टस्य कादाचित्कत्वेपि न क्षति । अन्यथा मायावच्छिन्नस्येश्वरत्वेनाभिमतस्य कादाचित्कत्वे ब्रह्मणोपि कादाचित्कत्व स्यात् । किंच सर्वस्य मायिकत्वस्वीकारेपि घटादीनामुत्पत्तिविनाशौ किंप्रयुक्ताविति वक्तव्यम् । मायाप्रयुक्तौ चेन्मायाया ज्ञानोत्पत्तिपर्यन्त सत्त्वेन सततमुत्पत्तिविनाशश्च कथ न स्यात् । न च सामग्रीसमवधाने उत्पत्तिर्नाशसामग्रीसमवधाने नाश इति वाच्यम्, सामग्रीसमवधानस्याकस्मिकत्वे युगपदुत्पत्तिविनाशयो प्रसगो दुर्वार एव । न चादृष्टविशेषस्य सामग्रीसमवधानप्रयोजकत्वकल्पनान्नानुपपत्तिरिति वाच्यम्, तादृशविशेषस्य वक्तुमशक्यत्वात् । किंचादृष्टस्यापि मायाहेतुकत्वेऽत कारणहेतुकत्वे वा तयोस्तत्त्वज्ञानपर्यन्त स्थायित्वेनादृष्टस्यापि तत्तावश्यकत्वेन तत्प्रयोज्यसामग्रीसमवधानस्यापि तथात्वेन सततमुत्पत्तिर्विनाशोपि कथ न स्यादन्यस्य कस्यचिन्नियामकत्वकल्पने तत्राप्युक्तदोषतादवस्थ्य, ईश्वरेच्छापर्यन्तानुधावने च त्वदुक्ता दोषास्त्वामेव हन्यु । नन्वस्मन्मते सर्वस्य मायिकत्वान्मायायाश्चानिर्वचनीयत्वादनिर्वचनीये च पूर्वपक्षौ न सभवति, दुर्घटघटनापटीयस्त्वादत एवोक्त "विस्मयैकशरीराया मायायाश्चोद्यरूपत । अन्वेष्य परिहारोऽस्य बुद्धिमद्भि प्रयत्नत" ॥ इति मायात्वमेव निश्चेयमिति चेत्तर्हि निश्चिनोतु । तस्मादत्र नाशकावकाश इति चेदचिन्त्यानतशक्तिके नतैश्वर्यशालिनि स्वलीलयाऽऽविर्भावतिरोभावशालिनि ब्रह्मणि कथ पूर्वपक्षावकाश इति । किंचानिर्वचनीयत्वेन घटादिषु मायिकत्व स्वीक्रियते चेद्ब्रह्मणोप्यनिर्वचनीयत्वेन मायिकत्व कुतो नेति वक्तव्यम् । यदि च तस्यानिर्वचनीयत्वेपि "सत्य ज्ञानमनत ब्रह्म" ति श्रुत्या सत्यत्वप्रतिपादनान्न मायिकत्वमित्युच्यते, तर्हि 'तत्सत्य'मित्यादिश्रुत्या जगतोपि सत्यत्वप्रतिपादनात्तस्यापि कथ मायिकत्वमिति दिक् । एतेन ( तस्मादिच्छाया अनियामकत्वान्मायैव नियामिका ) इत्यादिकमपास्तम् । यच्च (जगतो ब्रह्माभेदेन

जगद्धर्माणां ब्रह्मधर्मत्वकल्पने स्वतिप्रसंग ) इत्युक्तम्, तदपि न किंचित् तत्तद्रूपेणा-विर्भूतब्रह्मणि तत्तद्धर्मस्य तत्प्रतीतेश्चेष्टत्वात्। यदपि टीकोक्तमिच्छायां द्वैविध्यमनूद्य कालादीच्छायाः कालादिविषयत्वेऽनवस्थाप्रसंगः कालाद्यानंत्यं चेत्यादिदोषमुद्भावयित्वा तस्मादहुभावप्रकार एव प्रजायेयेत्यादिना प्रतिपादित इत्युक्तं तदपि न साधीयः, बहुभवन-प्रकारकेच्छायां बहुत्वेनैव भवनं विवक्षितं तत्तद्धर्मेण वा, आद्ये त्रिविधपदार्थोत्पत्त्यैव तद्विषयसिद्धावितरपदार्थानुत्पत्त्यापत्तिः॥ द्वितीये तु तत्तद्रूपेण विषयत्वस्वीकारे पूर्वोक्ता-पत्त्यभावेपि तादृशविषयत्वं कालिकाव्याप्यवृत्ति त्वयाप्यवश्यं स्वीकार्यमन्यथा पदार्थानां सर्वदोत्पत्तिप्रसंगस्तथाच कालविषयतायाः कालावच्छिन्नत्वविषयावच्छेदकयोर्भेदस्वी-कारेऽनवस्था, भेदास्वीकारे स्वात्माश्रय, एवं चेदशदूषणगणग्रस्तं स्वपक्षमदृष्ट्वा प्रलपन्नि-ग्रहस्थानं प्राप्त उपेक्षणीयः। जगन्नित्यत्वं तु विष्णुपुराणेपि प्रतिपादितं—"तदेतदव्ययं नित्यं जगन्मुनिवराखिलम्। आविर्भावतिरोभावजन्मनाशविकल्पवदिति"। "असत्यमप्रतिष्ठं ते जगदाहुरनीश्वर"मित्यादिना मिथ्यात्वस्वीकारे निंदाश्रवणाच्चेति बोध्यम्। इति द्वादश-खंडखंडनाभासस्याभासत्वप्रदर्शनम्। अथ त्रयोदशखंडखंडनाभासस्याभासत्वं प्रदर्श्यते॥ तत्र घटादेरनित्यत्वस्य बहुशो दूषितत्वात्पूर्वोक्तपुराणविरुद्धत्वाच्च ( तत्कालभेदं पुरुष आरोप्योपलंभाद्यभावसमर्पणतो वरं घटादेरनित्यत्वकल्पनमेवे ) ति कथनमसंगतं, यत्तु ( कार्यसामग्र्यनुपयुक्तेनोपाधिना कार्यवैलक्षण्ये कुंडलिनो देवदत्तस्योपलंभे दंडिनस्तस्यानु-पलंभप्रसंगा ) दित्युक्तं तदतिमंदं, तत्र कार्यपदेन यत्किंचित्कार्यं विवक्षितं कार्यत्वावच्छिन्नं वा, नाद्यः कार्यवैलक्षण्याभावप्रसंगात् सर्वस्यैवोपाधेर्यत्किंचित्कार्यानुपयुक्तत्वात्। द्वितीये त्वापाद्याऽप्रसिद्धिः। कार्यमात्रानुपयुक्तोपाधेरप्रसिद्धेः। पारिमांडल्यादेरपि स्वप्रत्यक्षोप-योगित्वात्। तत्तत्कार्यानुपयुक्तत्वाविवक्षणेपि आपाद्य दंडकुंडलादौ विशेषणत्वमुपलक्षणत्वं वा। आद्ये कुंडलादीनां विशिष्टोपलंभानुपयोगित्वेनापादकाभावादेवापत्त्यभावः। द्वितीये तु आपादक आपाद्यव्याप्यत्वाभावादापाद्यव्याप्यापादकवत्ताज्ञानरूपस्यापत्तिहेतोरभा-वादेवापत्तिर्न संभवति। किंच कालस्य कार्यसामग्र्यंतर्गतत्वे कार्यसामग्र्यनुपयुक्तत्वमेव न संभवतीति न किंचिदेतत्। उपलंभानुपलंभयोः कालभेदेनैव पुरुषभेदेन सत्त्वं तु सर्वप्रमाणसिद्धं शिष्टसंमतं च। किंच त्वमपि यथा तमःप्रकाशवद्विरुद्धस्वभावयोर्ज्ञाना ज्ञानरूपयोर्जडचेतनयोः परस्परात्मकत्वं मनुषे स्वदुरुक्त्या तथा सर्वत्र विरोधाभावं कुतो नांगीकरोषि। तत्र स्वगुरूक्तावविश्वासश्चेत्किमर्थं मायिकत्वमसत्त्वं वा सर्वस्य स्वीकुरुषे। ईश्वरः सर्वमिति तत्र संमतम्, तथा च किंचेश्वरः सर्वमित्युक्त्वा चिर-मम्बेति दोषस्त्विष्टापत्तिपराहतः। नास्ति किंचिदिति सर्वं सर्वस्य कारणमित्यादि स्वीकारस्तु मिथ्यावादिनामत एव युज्यते। सर्वं मिथ्येत्युक्त्वा सर्वमनिर्वचनीय-मित्युक्त्वा वा सकलदोषपरिहारसंभवात् ग्रंथगौरवमनेकग्रंथप्रणयनं च स्वन्मतानु-सारिणि व्यर्थमेव। यत्तु ( ऐतदात्म्यमित्यत्रापि लक्षणास्त्वेव सविशेषनिर्विशेषयो-र्विरोधेनैक्यासंभवात्। नहि वयं स्वद्गुरूक्तावपि विरोधो नेति ब्रुवंतो न जिह्रीमो यजमानप्रस्तर इत्यस्य श्रूयमाणेर्थे प्रामाण्यप्रसंगा ) दित्यादि प्रलपितं तदपि तुच्छम्।

ऐतदात्म्यमित्यत्र लक्षणायां मानाभावादस्यार्थस्तु पूर्वमेव विवृतः। निर्विशेषसविशेषयोर्भेदे त्वेकमेवाद्वितीयमिति श्रुतिविरोध। ननु श्रुतौ पारमार्थिकभेद एवोक्तो निर्विशेषसविशेषयोस्तु व्यावहारिकभेद एव स्वीक्रियत इति कथं विरोध इति चेत्तर्हि भेदस्य व्यावहारिकत्वमाश्रयव्यावहारिकत्वं विनाऽनुपपन्नमिति तदाश्रययोर्निर्विशेषसविशेषयोर्व्यावहारिकत्वम्वीकारे व्यावहारिकस्य च त्वन्मते मिथ्यात्वात्तयोरपि मिथ्यात्वापत्तिः, यदि त्वेकतरमिथ्यात्वेपि भेदस्य व्यावहारिकत्वोपपत्तेः सविशेषब्रह्मण एव मिथ्यात्वं न निर्विशेषस्येत्युच्यते, तदा तयोर्विरोधोपि व्यावहारिकत्वान्मिथ्यैव त्वया स्वीकर्तव्यमन्यथा च ब्रह्मणस्त्रिविधविरोधस्य च मिथ्यात्वं ब्रुवन् कथं न जिहेषि। त्रैकालिकनिषेधं ब्रुवतो न लज्जा केवलनिषेधकथने तु लज्जेत्यद्भुतम्। एवं यजमानप्रस्तर इत्यादावपि तत्सिद्धिसूत्रेऽ'र्थभेदादनात्मत्व'मित्यादिना प्रतिपादितस्यार्थभेदस्य त्वन्मते कालत्रयेपि सत्त्वेन श्रूयमाणेयेश्रुते प्रामाण्यं कुतो न स्यात् प्रस्तरयजमानयोरुभयोरपि मिथ्यात्वाविशेषेण यजमानस्यैव तस्य वह्नौ प्रक्षेप कुतो न स्यादिति वृथैव तवायं प्रयासः। नरकादावपि मिथ्यात्वज्ञानेन ब्रह्महत्यादावपि प्रवृत्तिस्त्वन्मत एव संगच्छते। यच्चै ("तदात्म्यमिदं सर्वं" मित्यादौ लक्षणास्त्येवे) त्युक्त्वा (न चैकस्मिन् महाप्रकरण एकत्र वाक्ये लक्षणाऽभावे पदांतरेपि सा नास्तीति नियम) इत्याद्युक्तं तन्मदम्। ऐतदात्म्यमित्यत्र वाच्यार्थेनैव पूर्वोक्तस्यैकविज्ञानेन सर्वविज्ञानस्य प्रकृतस्य सिद्धौ तत्रान्वयानुपपत्तितात्पर्यानुपपत्तिरूपलक्षणाबीजस्याभावान्मुख्यार्थबाधादीनां चाभावाल्लक्षणा न स्वीक्रियते। किंतु पूर्वोक्तन्यायेन शक्तिरेवेति न तत्र तादृशनियमानुसारेण किंचिदप्युक्तम्। तात्पर्यानुपपत्त्यादिसत्त्वे चैकस्मिन्नपि प्रकरणे लक्षणातदभावयोर्वृत्तौ विरोधाभावात्। किंचैकविज्ञानेन सर्वविज्ञानमपि सर्वस्य कारणावस्थाविशेषरूपत्व एव संगच्छते, न तु कार्यस्य मिथ्यात्वे। तत्र कार्यस्यैवाभावेन कस्य ज्ञानं, एवचोपक्रमविरोधः, सर्वस्यैव ब्रह्मप्रतिपादकस्य प्रपाठकस्यैकदेशे लक्षणया तत्प्रतिपादकत्वकथनं न युक्तिसहम्॥ न च ब्रह्मणो "यतो वाचो निवर्तन्त" इत्यादिना वागाद्यगोचरत्वप्रतिपादनाल्लक्षणा स्वीक्रियत इति वाच्यम्। तर्हि सकलप्रपाठकस्य लक्षणाया उचितत्वेन एकदेशे तत्कथने न्यूनताया दुर्वारत्वात्॥ "वायव्य श्वेतमालभेत" इत्यत्र तु "वायुर्वै क्षेपिष्ठे" तिवाक्यस्य स्वार्थपरत्व 'आम्नायस्ये'त्यादिसूत्रोक्तन्यायेनानर्थक्यापत्त्या विधिवाक्येन पदैकवाक्यत्वार्थं सकलवाक्यस्य लिङ्त्वांशप्रतिपाद्यशब्दभावनायामितिकर्तव्यतात्वेनान्वययोग्यप्राशस्त्ये लक्षणा स्वीक्रियते, तत्र मीमांसकाना मते यथा विधिवाक्यस्यैव शाब्दबोधजनकत्वं नार्थवादानामिति नियमस्तथा त्वन्मतेपि चेत्स्यात् तदा "तत्त्वमसी" त्यादिवाक्यानामानर्थक्यभियैकदेशे लक्षणा स्यात्, नत्वेवमस्ति, सर्वस्मिन्प्रपाठके फलभावनाबोधकस्य तादृशवाक्यस्याभावत्सर्वस्य महावाक्यस्याबोधकत्वं स्यादपसिद्धांतश्च तथास्वीकारे स्यात्॥ शारीरकभाष्ये सिद्धार्थप्रतिपादकानामपि स्वार्थे प्रामाण्यस्य शंकराचार्यैः सिद्धान्तितत्वात्तस्यातादृशोपष्टम्भकदर्शनमज्ञानादेवेत्यास्तां विस्तरः॥ तादृशनियमास्वीकारादेव च किंचेत्यादिकमपास्तम्॥ सर्वग्रंथेषु सोयं देवदत्त इत्यादिवत्तत्त्वमसीत्यादिवाक्येषु लक्षणायाः

प्रतिपादितत्वेन किं चास्माकं न लक्षणेत्यादिनाऽपह्नवस्तु तत्तद्ग्रन्थानवलोकनमूलकमेव ॥ लक्षणायामपि लक्षणाख्यव्यवहारस्यौपचारिकत्वे तस्य मुख्यत्वं कुत्रापि न स्यात् ॥ तत्त्वमसीत्यादिपदैकवाक्यतायास्त्वनभ्युपगमपरास्ता ॥ जडांशे विवर्तवादबोधने चिदंशे प्रकृताभेदबोधने च वाक्यभेदः स्यात् ॥ किंच जडांशे विवर्तवादो यदि श्रुत्यभिप्रेतः स्यात्तदा तत्प्रकरणे तत्सत्यमिति न ब्रूयात् तन्मिथ्येत्येव ब्रूयात्, ब्रह्मणोऽन्य "आत्मैवेदं सर्वं" 'ब्रह्मैवेदं' सर्व" मित्यत्र मिथ्येदं सर्वमित्येव वदेत्तस्मात् सर्वस्य ब्रह्मरूपतैव श्रुतिसम्मता ॥ सा चाविकृतस्यैव ब्रह्मणः सर्वरूपत्वे घटते ॥ यदि च तत्प्रकरणे सर्वस्य मिथ्यात्वं सम्मतं तदा यत्निषेधमुखेनैवोपसंहारे नेति नेतिन्यायेन न त्वमसीत्येव बोधयितुमुचितं ननु तत्त्वमसीति ॥ यत्तु (त्वंशस्यार्थे सत्ताभावस्य तिङर्थेनान्वयबोधनं न सम्भवति वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितानवच्छेदकत्वा) दित्युक्तं तदपि न किंचित् ॥ वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितानवच्छेदकत्वे क्षतिविरहात् ॥ न च जनकत्वस्वत्वसामानाधिकरण्यादिसम्बन्धावच्छिन्नप्रतियोगिताकाभावानामतिरिक्तत्वकल्पने गौरवमेव बाधकमिति वाच्यम्, जनकत्वं नास्ति स्वत्वं नास्तीत्यादिप्रतीत्यनुरोधेन जनकत्वस्वत्वाद्यभावस्य सर्वमतसिद्धतया तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावस्यापि तत्समनियतत्वेन समनियताभावानां चैकत्वेन गौरवानवकाशात् ॥ अत एव राज्ञः पुरुष इत्यादौ स्वत्वसम्बन्धावच्छिन्नराजत्वावच्छिन्नप्रकारकबोधस्वीकारे नञा विरहितस्थले येन सम्बन्धेन यद्वत्त्वं यादृशस्थले बोध्यते नञ्समभिव्याहारे तत्र तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावस्यैव बोध इतिनियमानुरोधेन पुरुषो न राज्ञ इत्यत्र स्वत्वसम्बन्धावच्छिन्नप्रतियोगिताकाभावाप्रसिद्ध्या तादृशवाक्यस्याप्रामाण्यापत्तिरूपदूषणेऽनिर्भरं कृत्वा राजस्वत्वाभाववान्पुरुषः सुंदर इत्यादिविशिष्टवैशिष्ट्यावगाहि प्रत्यक्षं प्रति सत्त्वसंसर्गकशाब्दबोधसामग्र्या प्रतिबंधकत्वकल्पनागौरवपर्यन्तानुधावनमपि भट्टाचार्याणां सङ्गच्छते ॥ तिङर्थस्यालीकत्वमर्थेऽन्वयबोधायोगादित्युक्तिस्तु जीवस्य नालीकत्वमितिपूर्वोक्तिविरुद्धा ॥ एवं च पूर्वापरानालोचनमूलत्वादुन्मत्तप्रलपितमिदम् ॥ किंच जीवस्यालीकत्वे त्वंपदार्थे तत्पदार्थस्याभेदप्रतिपादने बाधः ॥ सदलीकयोरभेदासम्भवात्तत्त्वे च सत्यस्य पारिभाषिकत्वापत्तिः ॥ अत एव नापि तिङर्थाभावस्त्वमर्थे बोधयितुं शक्यः तुच्छत्वेनानुयोगित्वप्रसिद्धेरित्युक्तिरप्यसङ्गता ॥ "अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति ही"ति न्यायेन तादृशबोधे बाधकाभावात्, इतरथा नाऽसदासीदित्यत्रान्वयबोधानुपपत्तिः ॥ असच्छब्दवाच्यस्य तुच्छस्याभावानुयोगित्वासम्भवात् तस्माद् त्वमसीत्येव स्यात् ॥ यत्तु मध्यमपुरुषानुपपत्तिकथनं तत्तु 'युष्मद्युपपदे' इति पाणिनीयसूत्रार्थाज्ञानात् । तेन हि युष्मत्पदसामानाधिकरण्ये मध्यमपुरुषो विधीयते नतु युष्मत्पदार्थसत्त्वे इत्युक्तं तत्तुच्छं यतो युष्मत्पदे तत्सामानाधिकरण्यं हि युष्मदिति तिङ्वाच्यकारकवाचकत्वम् ॥ अत एवोक्तं "तिङ्वाच्यकारकवाचिनी" ति, शेखरे च सामानाधिकरण्यमेकार्थबोधकत्वमित्युक्तं तथोच्यार्थेन समानाधिकरणयुष्मदर्थबोधकशब्दे उपपदे इति व्याख्यातम् ॥ युष्मदर्थालीकता च नैकविषयता इत्युक्तम् ॥ तिङ्वाच्यस्य धात्वर्थकर्तुः सत्ताश्रयस्य युष्मच्छब्दवाच्यालीकेन सामानाधिकरण्यासम्भवाद्युष्म

च्छन्दस समानाधिकरणत्वानुपपत्त्या मध्यमस्यानुपपत्तिरलीके सत्ताश्रयाभेदस्य बाधितत्वात्। युष्मत्पदसामानाधिकरण्ये मध्यमपुरुषोभिधीयत इत्युक्तिस्तु युष्मदर्थेन यत्र लोतस्य सामानाधिकरण्यं तत्र मध्यम इति कैय्यटोक्त्यनुसंधानमूलकैव ॥ किंच "प्रत्यक्त्वापरमात्मश्चेत्युपाधी कर्तृकर्मणोः। तयोः श्रुतिविशेषेण द्योतकौ मध्यमोत्तमा"-विति हरिकारिकानुरोधेन प्रयोक्त्रहंकारानास्पदचेतनस्य मध्यमवाच्यस्यालीकत्वे मिथ्यात्वे वा चिदंशे न विवर्तवाद इति पूर्वोक्तिविरोध इत्यलं विस्तरेण ॥ इति त्रयोदशखंडखंडनाभासस्याभासत्वप्रदर्शनम् ॥ अथ चतुर्दशखंडखंडनाभासस्याभासत्वं प्रदर्श्यते ॥ तत्र "परांचि खानी" त्यादिश्रुतौ संसारिणां प्रत्यक्त्वेन शुद्धात्मज्ञानाभाव एवोक्तो नतु सर्वथाज्ञानाभाव इति वदन् प्रष्टव्यः-शुद्धात्मपदेन धर्मसामान्यशून्यात्मग्रहणं वा यत्किंचिद्धर्मशून्यस्य वा नाद्यः। प्रत्यक्त्वेनेत्यत्र तृतीयाया वैशिष्ट्यार्थकत्वे प्रत्यक्त्वस्यैव धर्मतया धर्मसामान्यशून्यत्वासंभवात् ॥ प्रत्यक्त्वेन शुद्धात्मज्ञानस्यैवाप्रसिद्ध्या नांतरात्मन्नित्यादिना तन्निषेधोप्यसंगतः स्यात्। द्वितीये यत्किंचिद्धर्मविशिष्टस्याप्यात्मज्ञानस्य तद्विषयत्किंचिद्धर्मशून्यत्वस्याक्षततया घटपटादिज्ञानस्यापि यत्किंचिद्धर्मशून्यात्मज्ञानत्वेन संसारिणां तन्निषेधोऽसंगत एव॥ यत्किंचिद्धर्मशून्यत्वेन तज्ज्ञानस्याखंडाकारवृत्त्याप्यसंभवेन "कश्चिद्धीरः प्रत्यगात्मानमैक्षत" इत्यप्यसंगतं स्यात् ॥ एवं सर्वथेत्यत्रापि सर्वप्रकारेण सर्वधर्माविशिष्टत्वेनेत्यर्थकत्वेपि संसारिणां तादृशज्ञानासंभवेन तन्निषेधो न युक्तः ॥ किंच नांतरात्मन्नित्यत्र शुद्धात्मबोधकपदाभावाद्विशेषनिषेधपरत्वं न युज्यते, नहि घटं न पश्यतीत्यत्र शुद्धघटचाक्षुषाभाव एव प्रतीयते, न घटसामान्यचाक्षुषनिषेध इति वक्तुं शक्यते, पीतघटचाक्षुषवत्यपि तथा प्रयोगापत्तेः ॥ नचांतरशब्दसमभिव्याहारात्तथा प्रतीतिरिति वाच्यं, तस्य मध्यादिवाचकत्वेपि शुद्धवाचकत्वाभावादिति संक्षेपः ॥ यत्तु (मुद्गराभिघातजन्यघटनाशं त्यक्त्वा पापनाशे दोषोक्तिर्मुधे) त्युक्तं, तद्विद्वन्मंडनपंक्त्यर्थाज्ञानात् ॥ तत्रहि ज्ञाननाश्यत्वोक्त्या ज्ञानस्य चाज्ञानमात्रनिवर्तकत्वेनास्याप्यज्ञानकार्यत्वमुच्यत इत्युक्तं तस्य चायमर्थः-संसारस्य ज्ञाननाशकत्वमुक्तं तच्च तस्याज्ञानकार्यत्व एव घटते ज्ञानस्याऽज्ञानमात्रनिवर्तकत्वनियमादिति। एवं च तादृशनियमे व्यभिचारप्रदर्शनाय स च तदा स्याद्यदि ज्ञानस्यान्यनिवर्तकत्वं प्रदर्शितं स्यात्। तथाच व्यवहारदशायां स्मरणरूपज्ञानेन पापानामज्ञानकार्यत्वेनोभयवाद्यभिमतानां निवृत्तिदर्शनेन ज्ञानस्याज्ञानमात्रनिवर्तकत्वं न संभवतीति तादृशनियमानुरोधेन प्रपंचस्याज्ञानकार्यत्वं न वक्तुं शक्यत इत्यभिप्रायः ॥ मुद्गराभिघातस्य ज्ञानरूपत्वाभावात्तद्दोषप्रदर्शनेपि न प्रकृतोपयोग इति तदभिप्रायं तद्ग्रंथविज्ञः शिक्षस्व यदि खंडनेच्छा चेत्॥ पापनाश एव भवति न निवृत्तिरित्युक्तिस्तु कार्यस्यासत्त्वमभ्युपगच्छतो न शोभतेऽन्यथा सत्कार्यवाद आश्रितः स्यात् "विद्वान्नामरूपाद्विमुक्तः" इत्यादिश्रुतिस्तु विदुषि नामरूपनिवृत्तिं दर्शयति न नामरूपत्वावच्छिन्नस्य सर्वस्यैवाभावं, तथा च तदनुसारिणां मतेपि ज्ञानस्य प्रपंचनिवर्तकत्वं न संभवति तत्र प्रपंचवाचकपदाभावात्, अन्यथा सर्वपापनिर्मुक्त इत्यादिवाक्यतोपि पापशब्दप्रतिपाद्यानां सर्वेषां स्वर्गादीनां जगति पापिष्ठमुक्तिर्न॥ तस्माज्ज्ञानिनो नाम-

रूपविनिर्मोक एव श्रुत्यभिमत इति ॥ किंच ज्ञानस्याज्ञाननिवर्तकत्वेपि तत्कार्याहन्ताममतादिसंसारस्यैव निवर्तकत्वं न तु प्रपंचस्य तस्याज्ञानकार्यत्वाभावाद्भगवत्कार्यत्वाच्च ॥ ननु ममतादिसंसारस्यापि ब्रह्मकार्यत्वमंगीकरणीयमन्यथा ब्रह्मणः सर्वकर्तृत्वं हीयेतेति चेन्न ॥ ब्रह्मकार्यपदेन साक्षाद् ब्रह्मकार्यत्वस्य विवक्षितत्वादहंतादिसंसारस्याविद्याद्वारा ब्रह्मकार्यत्वाच्च व्यभिचारः ॥ त्वन्मते ब्रह्मज्ञानस्य जीवसृष्टद्वैतनिवर्तकत्वमेव नत्वीश्वरसृष्टद्वैतनिवर्तकत्वमपि अत एवोक्तमीश्वरेणापि जीवेन सृष्टं द्वैतं द्विधोच्यते ॥ विवेके सति जीवेन हेयो बंधः स्फुटीभवेदित्युपक्रम्य– अबाधकं साधकं च द्वैतमीश्वरनिर्मितम् ॥ अपनेतुमशक्यं चेत्यास्तां तद्द्विष्यते कुतः ॥ अग्रे च– यथाश्वेन्मानसं द्वैतं तद्विरोधेन शाम्यति ॥ अभ्यसेद्योगमेवातो ब्रह्मज्ञानेन किंवद– ॥ तात्कालिकद्वैतशांतावप्यागामिजनिक्षया ॥ ब्रह्मज्ञानं विना न स्यादिति वेदांतडिंडिम इत्यादिना तथा च स्वमतमज्ञात्वैव प्रपंचस्य ज्ञाननिवर्त्यत्वे प्रलापः ॥ नच जीवकल्पितसंसारातिरिक्तः प्रपंचो नास्त्येवेतिवक्तुं युक्तम् ॥ नास्तिकमतप्रवेशापत्तेः सर्वश्रुतिविप्लवापत्तेश्चेति ॥ नैवात्मनो न देहस्येति भगवदुक्तावविवेकस्तयोर्योसाविति तस्यैव संसृतिरिति तयोर्यो विवेकोसौ संसृतिः सामानाधिकरण्येनानान्वयसंभवे यस्येत्यध्याहारेण बहुव्रीह्याश्रयणे वा मानाभावाद्गौरवाच्च ॥ एवं चैतद्वाक्यानुसारेण– 'य एष संसारतरुः पुराणो मायामयो वेद स वेदवेदे'त्यादिपुराणवाक्यैर्यं मायामयत्वमुक्तं तदप्येतदासृष्टिरूपसंसारस्यैव न तु प्रपंचस्य । तन्नाशे ब्रह्मविदामाचार्यत्वं न स्यादित्युक्तं विस्तरतः प्राक् ॥ "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यती"त्यादि श्रुतिस्तु सुषुप्तिविषया न मुक्तिविषयेत्युक्तं स्वाप्ययसंपत्त्योरिति सूत्रे सदसतोः संबंधस्य त्वयानंगीकृतत्वेन मायाब्रह्मणोः संबंधाभावः ॥ स्वप्नदृष्टांतमात्रेणासत्यत्वं तु न संभवति श्रुतिसूत्रविरोधात् ॥ यत्तु (यद्यपि जागरदृष्टमरुमरीचिभिर्नं स्वप्नतापोपशमस्तथापि जागरमात्रेण तदुपशमोस्त्येवे) त्यादिविलपितं तदपि तत्रत्यपूर्वपक्षाज्ञानात् तत्राविद्याया असत्त्वे ब्रह्मणि तत्संबंधो न स्यात् संबंधस्य द्विष्ठत्वादित्याक्षेपे सत्येव संबंधः प्रतीयत इत्युक्ते उक्तं स्वप्नप्रतीततरणीकिरणतापोपतप्तस्य जागरितदृष्टमरुमरीचिजलधिवीचिविभ्रमस्तदुपशमाभिमानेन सुखित्वाभिमान इति तथा च तादृशप्रश्ने तादृशोत्तरेण कृतकृत्यताभ्रमः दृष्टांत इति ॥ तत्र ब्रह्मदर्शनस्य दार्ष्टांतिकत्वकथनं त्वज्ञानादेव । अत एवासतोपि प्रत्यायिका विद्या साचा सतीत्यादिनाऽयमेवार्थो विशदीकृतो विद्वन्मंडने इत्यलम् । असतोपीति इन्द्रियादेः स्वप्ने सत्प्रत्यायकत्वं यदुक्तं तदपि त्वन्मते विरुद्धं त्वन्मते स्वप्नस्य साक्षिवेद्यत्वाभ्युपगमात् कूटकार्षापणादेरपि कार्षापणत्वेन ज्ञानस्य व्यवहारहेतुत्वमिति तज्ज्ञानं सत्यमेव ॥ किंचासत्त्वे "सद्धेतुत्वे कथमसतः सज्जायत" इति श्रुतिविरोधः । एतेनासतः सत्यहेतुत्वे को दोष इति निरस्तम् ॥ किंच दृष्टांतानुरोधेन सर्वं स्वीकुर्वतस्तु दृष्टांतं त्यक्त्वा श्रुत्यनुसरणमपि नोचितम् ॥ न तावतापीष्टसिद्धिस्तत्र प्रपंचस्य सत्यत्वेन प्रतिपादनात् ॥ "तत्सृष्ट्वा तदेवानुप्राविशत्तत्सच्च त्यच्चाभव"दित्यादि श्रुतौ ब्रह्मण एव जगद्रूपत्वमुक्तम् ॥ तस्माज्जगद्रूपत्वमपि ब्रह्मणि वास्तवमेव न मायिकम् ॥ कल्पना तु लोकानुसारिण्येवेति नासतः सद्धेतुत्वं यदपि (यदित्यादिना तत्क्षणमेव तददर्शनाद्सत्त्वं साधयति

तद्याहत उपलब्धिक्षणेऽनुपलब्धेरभावा ) दित्यादि कुतर्कोद्भावन तदपि न किंचित् तत्क्षणमित्यस्य दर्शनक्षणानन्तरक्षणार्थकत्वादन्यथा प्र ह्लादामिहितार्थं तत्क्षणमित्दृष्ट-प्रमाणमित्यत्र तवाप्यगति स्यात् ॥ अभिधानस्य तच्छब्देन विवक्षणेऽभिधानक्षण एव आविर्भावस्वीकारे क्तप्रत्ययार्थविरोध ॥ एव "इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्र निमित्तत्वा"दिति सूत्रभाष्ये मनुष्यपुद्गल कदाचित्तत्क्षणे हस्ती भूत्वा देवो वा पुनर्मनुष्यो वा भवेदित्यादिशङ्कराचार्योक्तावपि तत्क्षण इत्यत्र तच्छब्देन मनुष्यपुद्गल-लक्षणोपादाने एकक्षण एव सघातद्वयोत्पत्ते परानभिमततया सगति स्यात् । सघावा रसधातावत्तरमुत्पद्यमानमिति पूर्वोक्तिविरोधश्च तस्मायथा तत्र तत्क्षणानन्तरक्षण एव विवक्षितस्तत्रापीति न दोष तादृशक्षणश्च तत्पदार्थनाशकत्वेन लोके क्लृप्ता या सामग्री तदसमवहितो ग्राह्यस्तथा च न स्वल्पकालनष्टघटादौ व्यभिचार वस्तुतस्त्वसन्मते वस्तुसत्त्वेऽसत्त्वे च श्रुतिरेव प्रमाण न युक्ति । एव च त्वदुक्तयुक्तिभिरेव त्वन्मते दोषो विद्वन्मडने प्रतिपादित ॥ अत एव सप्रति त्वद्गीसैव विचार्यत इत्युक्तम् ॥ तत्र दर्शनादर्शने दोषास्त्वयोक्तास्ते त्वय्येव निपतिता । अस्मासु तत्प्रदर्शन तु त्वदुक्त मौर्ख्यं त्वय्येव प्रकाशयति ॥ वस्तुतस्त्वित्यादिना तत्तन्मन्त्रादीना व्यावहारिकसत्त्वमाश्रित्य तत्कार्याद्द प्रतिपादयत्यङ्ग एव ॥ व्यावहारिकप्रातिभासिकसत्त्वयोर्भेदस्य वक्तुमशक्य त्वात् ॥ किंचित्कालस्थायिनि प्रातिभासिकसत्त्व बहुकालस्थायिनि व्यावहारिकमित्युक्तौ स्वल्पकालनष्टघटादौ प्रातिभासिक बहुकाल दृश्यमानस्वप्नादौ व्यावहारिक सत्त्वमापद्य तेति दिक् ॥ इति चतुर्दशखण्डखण्डनाभासस्याभासत्वप्रदर्शनम् ॥ अथ तत्र पूर्वपक्ष इत्यादे पञ्चदशखण्डखण्डनाभाससाभासत्व प्रदर्श्यते ॥ ( तत्र पूर्वपक्ष आरभवादे पूर्व द्रव्यनाशे मानाभाव ) इत्युक्त तदपि पूर्वपक्षाविचारणादेव ॥ पूर्वपक्षे पूर्वद्रव्यनाशस्या नुक्तत्वात् ॥ न चा 'विनाशी वारेऽयमात्मानुच्छित्तिधर्मे"ति श्रुतेर्नाशासभवाचेरयुक्ते स्तथाज्ञातमिति वाच्यम् ॥ तादृशश्रुतेरात्मनो नाशासभवाज्जीवस्वरूपनाशेनाभेदो यदि प्रतिपाद्यते तदापि तदभेदो न सभवतीत्यभिप्रायात् तथा च त्वन्मतनिरासार्थमेव तदुक्त नारभवादनिरासार्थमित्यवेहि ॥ तादृशश्रुतिघटकानुच्छित्तिधर्मेतिपदस्यानुच्छित्तिधर्मा यस्येत्यर्थकत्वे विनाशीत्यनेनैव तदर्थस्य प्रतीतत्वेनास्य वैयर्थ्य स्यात् ॥ न च तत्प्रति पाद्याविनाशित्वे हेतुप्रदर्शनमनुच्छित्तिधर्मेत्यनेनेति न तद्वैयर्थ्यमिति वाच्यम् ॥ तत्रानु-च्छित्तिपदेन नाशविवक्षणेऽविनाशित्वमेवाविनाशित्वे हेतुरित्युक्तम् ॥ तथा चात्माश्रय तस्माद्धेतुप्रदर्शनपरत्वेपि न विद्यते उच्छित्तिर्येषा तेऽनुच्छित्तयस्तादृशा धर्मा यस्येत्यर्थ कत्वमेव सम्यक् ॥ एव च रूपरसादीना नित्यत्व यथाश्रयस्य नित्यत्व विना न सभवति तथा धर्माणा नित्यत्वमपि धर्मिनित्यत्वज्ञापक सदविनाशित्वे हेतुरिति बोध्यम् ॥ यत्तु वृत्तिमत्व धर्मत्व तदाधारत्व धर्मित्वमित्युक्त्वा सर्पत्वस्य रज्जुवृत्तित्वेपि सर्पवृत्तित्वादेव धर्मत्वोपपत्तेरित्युक्त तद्भगत यदनिर्वचनीयमेव सर्पत्व तत्रोत्पद्यत इत्युच्यते तदा तत्रावर्तमानस्य तत्रोत्पत्तेरसभवादुत्पद्यत इत्यसगतम् । नचाविद्यमानमेव प्रतीयत इति वाच्यम् । असत्ख्यातिप्रसगात् न चानिर्वचनीयमेव तद्भूतत्वमिति वाच्यम् ॥ तादृश-

मानाभावात् किंच त्वन्मते जगत एव तादृशत्वेन घटत्वादिकं परित्यज्य रज्जुपर्यन्तानुधावनं व्यर्थमेव नयनगतपीतत्वस्य शंखादिवृत्तित्वेपि तदधर्मत्वादिति कथनं तु शास्त्रानभिज्ञत्वं द्योतयति ॥ नयने पीतरूपानंगीकाराच्चयनस्य तैजसत्वात् पित्तदूषितत्वेपि कालिंदीजलनीलिमावदौपाधिकमेव पीतत्वं न वास्तवम् ॥ एवमपि शंखे तद्वृत्तित्वं तु कथंचिदपि न संभवति ॥ साहसमाश्रित्य तद्वृत्तित्वं स्वीकारे तदधर्मत्वादित्यसंगतं वृत्तित्वातिरिक्तस्य धर्मत्वस्य त्वयाप्यनिरूपितत्वात् ॥ नन्वस्मन्मते धर्मत्वमनिर्वचनीयमेव तच्च तच्छंखनिरूपितत्वमिति चेद्वृत्तित्वं किंत्वन्मते नानिर्वचनीयं येन तच्छंखनिरूपितं पीतत्वं स्वीकुरुषे ॥ श्रीहर्षोक्तखंडनचतुर्थपरिच्छेदस्थदूषणैर्निरूपयितुमशक्यस्य लाक्षणत्वे तादृशपरिच्छेदस्थदूषणैर्वर्तमानत्वादीनामभावत्वादीनां च निरूपयितुमशक्यत्वेन तद्वदितत्रिकालाबाध्यत्वरूपसत्वस्यापि निरूपयितुमशक्यतया तस्यापि ब्रह्मलक्षणत्वं न स्यात् ॥ यत्तु तयोरजत्वेन संयोगाभावकथनमयुक्तमित्युक्त्वाऽजयोः संयोगे बाधकाभावादित्युक्तं तदपि हेत्वज्ञानात् नह्यजत्वं संयोगाभावे हेतुः किंतु विभुत्वमत एव टीकाकृतापि विभुनिरवयवयोः क्रियावयवराहित्याज्जन्यः संयोगो न वक्तुं शक्य इत्युक्तम् । अणुत्वपक्षे जीवस्यापितत्वस्वीकारे समवायसंबंधे तत्स्वीकारे सावयवत्वापत्तिरेव बाधिका ॥ एतेन जीवस्याश्रितत्व इत्यादिकं निरस्तम् ॥ यैः स्वरूपसंबंधः स्वीक्रियते तन्मते यस्य येन संबंधस्तस्य तदतिरिक्तत्वं स्वीक्रियते । अत एव ध्वंसादीनामधिकरणात्मकत्वमपि सगच्छते ॥ अत एवाधिकरणस्य कैवल्यमभावः न च कैवल्यं दुर्निरूपमिति वाच्यम् ॥ प्रतियोगिविनाभूतस्वस्वरूपस्यैव तत्वात् यत्तु (अंशांशिभावेनेत्याद्यसंगतम्, औपचारिकत्वप्रसगात् न हि हस्तादिर्देवदत्तादिर्भवती) त्याद्युक्तं तत्रोच्यते हस्तादिपदेन शिरसोपि ग्रहणं न वा आद्येऽवयवत्वेन देवदत्तात्मकस्य तस्य छेदेपि हस्तादिच्छेद इव देवदत्तहननप्रायश्चित्ताभावप्रसंगात् ॥ द्वितीये तस्यावयवत्वानुपपत्तिस्तस्माद्धस्तादीनां देवदत्तत्वे तत्र वाचनिकस्वल्पप्रायश्चित्तस्य बाधकत्वान्न संपूर्णप्रायश्चित्तम् ॥ एवं चांशांशभावेपि नौपचारिकत्वम् ॥ किंच जीवब्रह्मणोः स्वरूपस्य वेदैकसमधिगम्यत्वाद्वेदे चांशांशिनावस्यैव प्रतिपादितत्वात्तथैवाभेदोपि प्रतिपादितः नहि ब्रह्मस्वरूपं चक्षुरादिगम्यमलौकिकत्वादस्वरूपित्वेन तत्र चक्षुरादीनां सामर्थ्याभावात् न च पूर्वखंडे रूपरहिताकाशविषयकचाक्षुषस्योक्तत्वेन तद्विरोध इति वाच्यम् ॥ आकाशस्य रूपरहितत्वे प्रमाणाभावात् तत्रापि पंचीकरणप्रक्रियया रूपवत्वसंभवात् ॥ यत्तु तद्गृहीतत्वादित्यत्र स्पर्शपरामर्शो न संभवत्यप्रकृतत्वादित्युक्तं, तदपि मंदम् ॥ नहि प्रक्रम्यमाणार्थवाचकत्वमेव तच्छब्दस्यापि तु बुद्धिस्थवाचकत्वमपि तथा च स्पार्शनमित्युक्ते स्पर्शस्यापि बुद्धिविषयत्वात्तद्बोधने बाधकाभावात् ॥ तद्धितार्थोपसर्जनत्वादिति हेतुरप्यसंगतः स्पर्शस्य तद्धितार्थोपसर्जनत्वाभावात् किंच सर्वं नाम्नामुत्सर्गतः प्रधानपरामर्शित्वं प्रायिकं अन्यथा-"दर्शते राजमातंगास्तस्यैवामी तुरंगमा" इत्यादौ तच्छब्देन राज्ञः परामर्शानुपपत्तेः यत्तु परिदेवेनेत्यादिना टीकाकृदुक्तमनूद्य टीकाकृतश्चार्वाकमतानुवादोऽसंगतश्चार्वाकस्य प्रत्यक्षैकप्रमाणवादित्वादित्युक्तं, तदपि शास्त्रहृदयानभिज्ञ-

त्वादेव नहि परं प्रति स्वमतसिद्धप्रमाणेनैवोपस्थातव्यमिति नियमोऽन्यथा प्रत्यक्षभिन्नेऽप्रामाण्यं तेन कथं साधनीयमिति वक्तव्यं प्रत्यक्षेणैवेति चेत्तर्हि प्रत्यक्षप्रमाणभिन्नेषु प्रत्यक्षेण प्रामाण्याप्रामाण्ययोर्निश्चेतुमशक्यत्वेन तत्सिद्धिर्न स्यात् प्रत्यक्षातिरिक्तं न प्रमाणमिति वाक्येन चेत्प्रतिज्ञामात्रेणार्थसिद्धेरभावात् न्यूनत्वं स्यात् वादिनोऽनाप्तत्वेन तद्वाक्यमात्रेणार्थसिद्धेरभावात् यदि च प्रत्यक्षातिरिक्तं न प्रमाणं प्रमितिकरणतावच्छेदकरूपशून्यत्वादिति हेतुनेत्युच्यते तदा प्रतिवादिना प्रत्यक्षभिन्ने व्याप्तिज्ञानरूपेऽनुमाने प्रमितिकरणतावच्छेदकं व्याप्तिनिश्चयत्वमस्त्येवेत्यसिद्धावुद्भावितायां व्याप्तिज्ञानत्वं व्यभिचाराप्रकारकत्वासमानाधिकरण स्वावच्छिन्नोत्पत्त्यव्यवहितं प्राक् क्षणव्यापकव्यभिचारप्रकारकज्ञानसामग्रीकज्ञानमात्रधर्मत्वादिति हेतुनैवासिद्धिः परिहर्तव्या ॥ एवं चानुमानस्याप्रामाण्ये तादृशहेतौ तज्ज्ञाने वानुमितिकरणतावच्छेदकधर्माभावाज्ज्ञानेन प्रत्यक्षातिरिक्तेऽप्रामाण्यानुमितिरिति प्रत्यक्षमात्रस्यैव प्रामाण्यं तन्मते न सिध्येत् किंच चार्वाकमतेऽनुमानस्याप्रमाणत्वे शिष्यं प्रति प्रत्यक्षातिरिक्तं न प्रमाणमित्युपदेशोपि तेषां न युज्यते उपदेशस्य शिष्यसंदेहविपर्ययनिवृत्तिरूपेष्टसाधनताज्ञानजन्यकृतिजन्यत्वात्परकीयसंशयविपर्यययोरप्रत्यक्षत्वात्तस्मादनुमानस्य प्रामाण्यमनिच्छतोपि चार्वाकेण स्वीकार्यं अनुमाने स्वत प्रामाण्यस्वीकारे प्रामाण्यसंशयानुपपत्तेः ॥ एतेनानुमानमपीत्यादिकमसंगतम् ॥ आप्तत्वं न यथार्थवादित्वं याथार्थ्यानिरुक्तेः ॥ तद्वति तत्प्रकारकत्वादिरूपस्य ह्रदो वह्निमानित्यादि वाक्यजन्यबोधेपि सत्वात्तस्यापि वह्नित्ववति वह्नित्वप्रकारकत्वादित्यत्र विस्तरः किंच यदा कदाचिद्यथार्थवादित्वं सर्वसाधारणत्वादव्यावर्तकम् ॥ यावज्जीवं यथार्थवादित्व दुर्लभं यथाकथंचिदनुगमे तु यथादृष्टवादित्वरूपलक्षणेप्यनुगमसंभवात्तत्परित्यागोनुचित इति ध्येयम् ॥ धर्मस्यालौकिकत्वे न तद्विचारोपि न लोकरीत्या पूर्वमीमांसायामतः पूर्वमीमांसोच्छेद इत्यसंगतम् ॥ व्यासेन लोकरीत्या विचारितमित्युक्तिर्व्याससूत्रार्थापरिज्ञानादेव ॥ इति पंचदशखंडखंडनाभासस्याभासत्वप्रदर्शनम् ॥ तत्र तावन्नेत्यादेर्षोडशखंडखंडनाभासस्याभासत्वं प्रदर्श्यते ॥ तत्र नानाशब्दस्यानेकार्थकत्वमव्ययानामनेकार्थत्वादन्यथा प्रकृतिप्रत्ययलभ्यस्यैव शब्दार्थत्वे विनाशब्दस्यापि विशेषार्थकत्वापत्तेर्नानाशब्दस्य निषेधार्थकत्ववत् ॥ "सोऽन्वेष्टव्य. स विजिज्ञासितव्य एतमेव विदित्वा मुनिर्भवति य आत्मनि तिष्ठ"न्नित्यादिष्वपि भाष्ययुक्तासु श्रुतिषु नानाविधव्यपदेश एव न तु भेदस्य व्यपदेशः ॥ एवं च स च भेदं वक्तुमर्हतीत्यसंगतम् । नञो भेदमात्रार्थकत्वाभावात् ॥ जीवस्यांशत्वे तु "यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मन· सर्वे प्राणा· सर्वे लोका सर्व एवात्मानो व्युच्चरन्ती" त्यादिश्रुतिरेव प्रमाणं। एतेन ( विरुद्धधर्माश्रयत्वेन ब्रह्मातिरिक्तत्वाभावसिद्धावपि तदंशत्वं येन सिध्येत् ) दिति परास्तम् । अभेदमात्रेणांशत्वासाधनात्तुल्यैवांशत्वसाधनादभेदेनांशत्वोक्तौ तु ब्रह्मणोप्यंशत्व स्यादिति पूर्वपक्षोप्यविचिकरः। श्रुतौ ब्रह्मणोंऽशत्वाप्रतिपादनात् ब्रह्मणि विरुद्धा धर्मास्तु श्रुतिप्रतिपाद्या एव स्वीक्रियते नान्य इत्युक्तं जीवस्याणुत्वं तु पूर्वमेव प्रपंचितम् ॥ यत्तु ( भेदव्यपदेशमात्रस्यांशत्वसाधकत्वं तु वदन् व्याप्त्यादिरीति-

भंजानुपेक्ष्य ) इत्यादि प्रलपितं तदपि भ्रांतत्वान्नहि व्यासैरंशत्वे नानाव्यपदेशादिति पंचम्यंतातिरिक्तो हेतुः प्रदर्शितो येन तन्मात्रस्य नांशत्वसाधकत्वं स्यात् ननु नानाव्यपदेशः सोन्वेष्टव्यः स विजिज्ञासितव्य इत्यादिकः स च स्वामीभृत्यसारूप्ये वियुज्यत इति नांशत्वसाधक इति चेत् स्यादेवं यदि नानाव्यपदेशस्तावन्मात्र एव स्यात् भवति तु "यथाग्नेर्विस्फुलिंगा व्युचरंत्येवमस्मादात्मनः सर्वे एवात्मानो व्युचरंतीत्यादिकोपि ॥ स च न त्वदुक्ते सारूप्ये युज्यते नचैव "अन्यथा चापि दासकितवादित्वमधीयत एव" इति सूत्रांशस्य वैयर्थ्यमिति वाच्यम् ॥ श्रुत्यंतरे "ब्रह्मदाशा ब्रह्मदासा ब्रह्मेमे कितवा" इत्यादिना दाशादीनां ब्रह्मत्वं प्रतिपादितं तच जीवानां ब्रह्मकार्यत्व एव घटते ॥ तथा य इत्यादि श्रुतौ प्रतिपादितानां प्राणलोकादीनामिव जीवानामपि कार्यत्वं स्यात्तथा च "नात्माऽश्रुतेर्नित्यत्वाच ताभ्य" इति पूर्वसूत्रविरोध इत्याक्षेपोद्धारार्थकत्वेन सार्थकत्वात् कथं दर्शनेनांशेपोद्धार इति चेच्छृणु ॥ पूर्वोक्तश्रुत्या स्वाजीवानां कार्यत्वं यदि दाशाद्युद्देशेन ब्रह्मत्वं विधीयेत ॥ विधीयते त्वन्यथापि दासत्वकितवत्वादिकं ब्रह्मणि ॥ एवं चेमे कितवा इत्यादौ इदमास शरीरस्य परामर्शाच्छारीरत्वेन अंशत्वेन ब्रह्मोद्देशेन विधानमंशत्वमेव प्रतिपादयति न कार्यत्वम् ॥ तथा च जीवस्य स्वरूपतो जन्माभावेन कार्यत्वाभावात् ब्रह्मणः सकाशाद्विस्फुलिङ्गवद्विभाग एव नोत्पत्तिरिति नोक्तसूत्रविरोधः ॥ एतेन किंचेत्यादिकमपास्तम् ॥ आभासस्य नालीकत्वमिति तु न युक्तं तस्यालीकत्वाभावे सत्यत्वप्रसंगात् तथात्वे द्वैतापत्तिः ॥ किंच जीवस्य प्रतिबिंबात्मकत्वे प्रतिबिंबस्य च त्वन्मते मिथ्यात्वाज्जीवस्यापि मिथ्यात्वात्तन्नियामकत्वमीश्वरे न संभवति तथा च "य आत्मनि तिष्ठन्नि"त्यादिकायाः श्रुतेर्विरोधः ॥ नच स्वाप्नप्रपंचस्य मिथ्यात्वेपि तन्नियामकत्वं यथेश्वरस्य तथा जीवनियामकत्वमपि सेत्स्यतीति वाच्यम् ॥ स्वाप्नप्रपंचस्य मायामात्रत्वेन तन्नियामकत्वाभावेपि श्रुतिविरोधाभावेन दृष्टांतासिद्धेः ॥ न च जीवस्यापि मायिकत्वमेवेति वाच्यम् ॥ अजो नित्यः शाश्वतोयं पुराणो न हन्यते हन्यमाने शरीरे । "नात्मा श्रुतेर्नित्यत्वाच ताभ्य" इत्यादिस्मृतिसूत्रविरोधापत्तेः ॥ एतेन किंचेत्यादिकमपास्तम् ॥ यत्तु "नैषा तर्केण मतिरपनेये"त्यादिश्रुतौ तर्कनिषेधस्तु श्रुतिप्रतिकूलतर्कविषय इत्युक्तं तन्नाऽभेदोऽशत्वसाधकस्तर्कः श्रुतिप्रतिकूलो न वेति ॥ सांशत्वप्रतिपादकश्रुतिप्रतिकूलत्वेपि "निष्कलं निष्क्रियं शांत"मित्यादिश्रुत्यनुगृहीत एवेति चेत्तर्हि द्विविधश्रुत्यनुगृहीतेन विरुद्धधर्माश्रयत्वरूपेण किमपराद्धमिति स एव कुतो नांगीक्रियते ॥ किंच तादृशतर्कानुसरणे–'ममैवांशो जीवलोके जीवभूतः सनातन' इति स्मृतौ "अंशो नानाव्यपदेशा"दिति सूत्रे चांश इवांश इत्यादिलक्षणाकल्पनगौरवं स्यात् ॥ श्रुत्यगृहीततर्को बलवानित्युक्त्या "न कर्मणा न प्रजये" त्यादि श्रुतेः प्राबल्यं न्यायोपबृंहितश्रुतेः प्राबल्यदर्शनमत एवेत्यादिना कथकसंप्रदायविरुद्धम् ॥ न्यायाप्रदर्शनान्यूनत्वं च दोषः ॥ यजमानप्रस्तर इत्यादावपि सामानाधिकरण्यदर्शनेन तच्छ्रुतेर्नामपरत्वं भेदपरत्वं स्तुतिपरत्वं वेति संदेहे न्यायात्स्तुतिपरत्वरूपतात्पर्यावधारणं भवति ननु न्यायाच्छ्रुत्यर्थस्य बाधोऽन्यथा मीमांसायाः श्रुतिप्रतिकूलत्वमेव स्यात् । तथाच यजमान-

प्रस्तर इत्यादौ श्रुत्यर्थबाधं वदन्नुपेक्ष्य ॥ स्मृत्योर्विरोधे न्यायस्तु बलवान्व्यवहारत । इति याज्ञवल्क्यस्मृतावपि-निह्नुते लिखित नैकमेकदेशे विभावित ॥ दाप्य सर्वो नृपेणार्थो न ग्राह्यस्त्वनिवेदित ॥ अनेकार्थाभियोगेपि यावत्ससाधयेद्धनी ॥ साक्षिभिस्तावदेवासौ लभते साधित धनम् ॥ इत्यनयो स्मृत्योर्विरोधे सति तद्विरोधपरिहाराय न्यायस्यो-त्सर्गापवादलक्षणस्य समर्थत्व प्रतिपादितम् ॥ तच्च विषयभेदेन तयोर्व्यवस्थापन एव सभवति न श्रुत्यर्थबाधे ॥ एव च तर्कस्य श्रुत्यर्थबाधकत्वमुक्त्वा अत एव याज्ञवल्क्यो व्याहेत्यादिना यत् प्रलपित तदसगतमेव ॥ अत एव श्रुते सर्वप्रमाणेभ्य प्राबल्यमपि सगच्छते ॥ यदि तर्कस्य श्रुत्यर्थबाधकत्वमित्येव तवाग्रह, तदा शाक्यबुद्धादिप्रदर्शित प्रबलतर्कानुसारेण श्रुत्यर्थबाधमंगीकृत्य तन्मतमेव कुतोऽनाशिश्रिय ॥ यत्तु (जीवस्ये-श्वेतरस्यापि ब्रह्माभेदे सर्वोपपत्तावन्यतरपक्षपातोऽनुचित) इत्युक्त, तदपि तदैव युज्या यदि यथेतरस्य ब्रह्माभेदप्रतिपादका श्रुतिर्दृश्यते तथैव तस्याशत्वप्रतिपादिका स्वस्वरूपेण नित्यत्वप्रतिपादकापि काचिच्छ्रुतिरुपलभ्येत । अथवा तर्कस्य श्रुतित प्राबल्यमसन्मते स्यात्तदा त्वदुक्तो दोष स्यात् ॥ जीवे चाणुत्वाशत्वस्वरूपेण नित्यत्वप्रतिपादकश्रुतिदर्श नात्तत्र पक्षपात श्रौतानामुचित एव ॥ एव चास्मन्मते-ममैवाशो जीवलोके जीवभूत सनातन । इति स्मृतिरपि सगच्छते ॥ तन्मते तु तत्रापि अश इवाश इत्यादिलक्षणाश्रयणे सनातनादिपदस्याप्यर्थान्तरकल्पने गौरव स्यात् ॥ एव नैष तर्केणेत्यादिप्रामाण्याच्छ्रुत्यर्थ विरुद्धे न तर्केण श्रुत्यर्थबाधस्यानुचितत्वात् तदुक्ततर्काणामनुपादेयत्वैव ॥ भ्रान्तिमूलानां सारव्यादिसमयाना तदुक्तस्मृतीना च निरासार्थं द्वितीयाध्यायसूत्राणि व्यासैरारब्धान्यस्म दाचार्यैश्च व्याख्यातानि ॥ एतेन श्रुतिविरोधपरिहारार्थं द्वितीयाध्यायसूत्राणीति त्वद्विला-पोपि निरस्त ॥ श्रुतिसमतस्य न्यायस्य विचार आद्यतत्वाध्यायमनाद्यलेस्याद्यसगत मोक्षस्य कर्मतत्त्यागोभयसाध्यत्व इष्टापत्ति जीवस्यानशत्व तु श्रुत्यसमतत्वादनुपादेय जीवस्याश त्व तु "मन्त्रवर्णादपि च स्मर्यत" इत्यादि सूत्रैर्दृढीकृत त्वन्मते तु तयो सूत्रयोर्विरोधोपि ॥ तदुक्त जीवस्यानब्रह्माभिन्नत्व त्वशत्वेन तादात्म्यादेव भेदसहिष्णुरभेदस्तादात्म्यम् ॥ नच निंबार्कमतप्रवेशापत्तिरिति वाच्यम् ॥ तन्मते भेदस्य वास्तवत्वात् ॥ भेदाभेदयो र्विरोधस्तु वास्तवयोरेव ॥ एतेन भेदाभेदयोर्विरोधेनैकत्रानवस्थानाचेत्यसगतम् ॥ किंच भेदाभेदयोर्विरोध इत्यपि सामान्येन न सभवति ॥ यत् किंचित्प्रतियोगिकभेदवति घटादौ स्वाभेदसत्वात्रापि तत्प्रतियोगिकभेदस्तत्प्रतियोगिकाभेदविरोधीति सयोगिभेद-तद्भेदयोरेकस्मिन्वृक्षे सत्वादिवन्यत्र विस्तर ॥ यत्तु (विस्फुलिंगाना वन्यभेद वदन्नेव प्रष्टव्य किमिमे विस्फुलिंगात्मकवह्नेरभिन्ना उत उपादान वह्नि ॥ नाद्य ॥ जीवस्य वाद्शदृष्टान्तेन स्वसादेवाभेदसिध्या ब्रह्मणस्तदसिद्धे) रित्यादिप्रलपित तदप्यज्ञानात् ॥ विस्फुलिंगो वह्निरित्यादिप्रतीत प्रमात्वानुरोधन वह्न्यभेदो विस्फुलिंगे प्रतीयते ॥ तत्र वह्नित्वावच्छिन्नाभेद एव तादृशप्रतीतिविषय सतु वह्नित्वावच्छिन्नयत्किंचिद्वह्न्यभेदेप्यु पपद्यतेऽन्यथा घटो द्रव्यमित्यत्राप्यभेदान्वयबोधनापत्ते द्रव्यत्वावच्छिन्नयावद्द्रव्याभेदस्य तत्र बाधितत्वात् ॥ किंच विस्फुलिंगा स्वात्मकवह्नेरभिन्ना उत उपादान वह्नेरित्याकारक

पूर्वपक्षोप्यसंगतः ॥ विस्फुलिंगानात्मकत्वेविस्फुलिंगोपादानत्वासंभवात् ॥ नहि घटाकारतामप्राप्तया मृदा घटोपादानत्वं दृष्टम् ॥ एवं च यथा विस्फुलिंगेऽग्न्यंशेऽग्नित्वसत्वादग्न्यभिन्नत्वमेवं जीवे ब्रह्मांशे ब्रह्माभिन्नत्वमबाधितमेवेति संक्षेपः ॥ एतेनांशेऽव्युच्चरणादूर्ध्वं चेत्याद्यसंगतो विकल्पो निरस्तः ॥ नच पटेत्यादिसु विषमो दृष्टांतः पटस्य तंतूपादानत्वासंभवात् ॥ सर्ववाचकपदस्य प्रकृतेऽभावेन सर्वब्रह्माभेदो न संभवतीति कथनमयुक्तम् ॥ ब्रह्मांशस्य जीवस्य व्युच्चरणात् पूर्वमपि ब्रह्मत्वात्पश्चादपि ब्रह्मांशत्वेन ब्रह्मत्वात् पुनरविभागेपि ब्रह्मत्वादस्मन्मते सर्वदैव ब्रह्माभेदः संभवति तथा च त्वदुक्तस्य कथं चानेन दृष्टांतेन सर्वदा ब्रह्माभेदवादिनामेव इष्टसिद्धिरिति पूर्वपक्षस्यानवकाशः ॥ यच्च तस्मादुपाधिनिर्गमनेनैव जीवनिर्गम इति स्वसिद्धांतप्रतिपादनं तत्तुच्छतरमेव ॥ जीवस्यैवौपाधिकत्वे मानाभावात् । किंच उपाधेर्निर्गतस्य जीवत्वापादकत्वमनिर्गतस्य वा नाद्य. जीवस्य सादित्वापत्तेः ॥ तथा सति संसारस्यापि सादित्वापत्तिः ॥ नापि द्वितीयः । अनिर्गतस्योपाधित्वे मानाभावात् ॥ नचानिर्गतस्याप्युपाधित्वं स्वीक्रियत एवेति वाच्यम् ॥ तथा सति मुक्तानामपि जीवत्वापत्तिरनिर्गतोपाधीनां कारणात्मना सत्वात् ॥ एतेन घटाकाशवज्जीवाविर्भावो युक्त इत्यपि निरस्तम् ॥ किंच घटाकाशवज्जीवाविर्भावस्वीकारे यथा घटाकाशस्य न संज्ञांतरे तथैव जीवेति संज्ञा तस्य न स्यात् ॥ तस्मादौपाधिको जीव इत्यसंगतमेव ॥ इति षोडशखंडखंडनाभासस्याभासत्वप्रदर्शनम् ॥ अथ भगवदिच्छया जीवस्यैश्वर्यादीत्यादि सप्तदशखंडखंडनाभासस्याभासत्वं प्रदर्श्यते । तत्र जीवस्यैश्वर्यादि तिरोभावेपि वैषम्यं न संभवति वैषम्यं नैर्घृण्यं च भेदे संभवति नत्वात्मसृष्टावीश्वरः स्वयमेव लीलार्थं स्वेच्छया तत्तद्रूपेणाविर्भूतः पुनश्च मर्यादामार्गानुसारेण तत्तत्कर्मानुसारेण तत्तत्कर्मानुरूपं फलं ददाति कर्म कारयति चेत्यपि लीलैव ॥ अत एवोक्तं "लोकवत्तु लीलाकैवल्य"मिति "एषह्येव साधुकर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषत एष उ वा साधुकर्म कारयति तं यमधो निनीषत"इति च त्वन्मते च सर्वस्य मिथ्यात्वान्न कोपि कारयति न कोपि करोति नापि लीलेति सर्वश्रुतिसूत्रविरोध एव ॥ ईश्वरस्य यथा सृष्टीच्छा तथा भोगेच्छापि भवत्येव ॥ नचाप्तकामत्वान्न भोगेच्छा संभवतीति वाच्यम् ॥ तर्हि "बहु स्यां प्रजायेये" तीच्छापि श्रुतिप्रतिपादिता बाधिता स्यात् ॥ यदि च तादृशेच्छासत्वेपि तस्याप्तकामत्वं न हीयत ईश्वरत्वादित्युच्यते तदा प्रकृतेपि तुल्यम् ॥ अत एवोक्तं "सर्वधर्मोपपत्तेश्चे"ति सर्वधर्मा ब्रह्मणि उपपद्यंते सर्वसमर्थत्वादित्यर्थः ॥ यत्तु सूत्रस्य विषयवाक्यालाभ इत्युक्तं तन्मंदम् ॥ "संध्ये सृष्टिराह ही"ति सूत्रमारभ्य "देहयोगाद्वासो"पीति सूत्रपर्यंतमेकमेवाधिकरणं तस्य च विषयवाक्यं "एतस्य वा पुरुषस्य द्वे एव स्थाने भवत इदं च परलोकस्थानं च सध्यं तृतीयं स्वप्नस्थान"मित्याकारकं तदेव तदधिकरणपरसर्वसूत्राणां विषयवाक्यं च ॥ यदि च प्रतिसूत्रं भिन्नमेव विषयवाक्यमित्येव तत्राभ्युपगमस्तदा "गौणश्चेन्नात्मशब्दात् तन्निष्ठस्य मोक्षोपदेशा"दित्यादि सूत्राणामपि कुतो न विषयवाक्यलाभः ॥ तत्र विषयवाक्यादर्शनात्तस्मा-

"त्पराभिध्यानात्तु तिरोहित" मित्यादिसूत्रं विद्वन्मंडनोक्तरीत्यैव व्याख्याने संगच्छते ॥ ध्यै चिन्तायामित्यादिना चिंतार्थकत्वेन प्रतिपादितस्यापि ध्यै धातोरभ्युपसर्गसन्निधानेनेच्छाबोधकत्वं संभवत्येव ॥ भूधातोः सत्तार्थकस्य यथानूपसर्गसन्निधानादनुभवरूपार्थबोधकत्वं एतेनाभिध्यानशब्दस्येच्छायां रूढौ मानाभावेनेत्यादिकस्य त्वदुक्तस्यानवकाशः ॥ उपासर्गेणेत्यादिवचनस्य प्रमाणत्वात् परस्याज्ञानस्याभिध्यानादभिनिवेशात् स्वरूपं तिरोहितमित्यादि व्याख्यानं तु स्वमतानभिज्ञत्वात्तेन कृतम् ॥ तन्मतेऽज्ञानस्यैव स्वरूपतिरोभावहेतुत्वं नतु तज्ज्ञानस्यापि ॥ किंचाभिध्यानादिति व्यर्थमेव परात्तिरोहितमित्यस्यैव सम्यक्त्वात् किंच "परात्तु तच्छ्रुते" रित्यादौ "ब्रह्मविदाप्नोति पर" मिति श्रुतौ ब्रह्मवाचकत्वेन निश्चितस्य परशब्दस्याज्ञानवाचकत्वे यानाभाव इत्यपि बोध्यम् ॥ वस्तुतस्त्वित्यादिनोक्तव्याख्याने तु आविर्भवतीत्यध्याहारे गौरवम् ॥ एवमीश्वरात्मज्ञानेन बंधश्चेदीश्वरस्य बन्धं प्रत्यन्यथासिद्धत्वात्तच्छब्देनेश्वरपरामर्शे कारणत्वबोधकपंचम्यसंगतिः ॥ अज्ञानपरामर्शश्चाज्ञानस्याप्रकृतत्वादेव न संभवति एकस्य तच्छब्दस्येश्वरज्ञानतदज्ञानबोधकत्वासंभवेनावृत्तिकल्पने गौरवं चेति ॥ एवं बन्धतदभावयोरज्ञातज्ञातेश्वरप्रयुक्तत्वमित्यप्यसंगतम् ॥ बंधस्याज्ञातेश्वरप्रयुक्तत्व एकस्य पुरुषस्येश्वरज्ञाने सत्यपि तस्य बंधहानिर्न स्यात्तदानीमप्यनेकपुरुषीयाज्ञानसत्वेनाज्ञातस्येश्वरस्य बंधहेतोः सत्वात् ॥ सर्वमोक्षो वा स्यात् ज्ञातेश्वरस्य सत्त्वात् ॥ यदि चाधुना कस्यापि ज्ञानं नोत्पन्नं यदा उत्पत्स्यते तदा सर्वमोक्ष इष्ट एवेत्युच्यते तदा "यो यो देवानां प्रत्यबुध्यत स एव तदभव" दित्यादि श्रुतिविरोध इत्यलमतिविस्तरेण ॥ यत्तु ( जडानां सदंशादेवोद्भव इति सत्त्वेनोपलभ्यमानजीवानां चित्त्वेन चोपलंभ इति निष्प्रमाण ) मित्यूचे तत्र स प्रष्टव्यः किं जीवानां चित्त्वेनोपलंभे प्रमाणं नास्तीति ब्रूषेऽथवा जीवानाचित्त्वेनोपलंभस्तथा जडानामपि स्यान्नियामकाभावादिति ॥ आद्ये उपलंभ एव प्रमाणं प्रमाणेपि प्रमाणापेक्षणेनवस्थाप्रसंगात् ॥ द्वितीये चिदंशस्य तिरोभावादेव न जडानां चित्त्वेन प्रतीतिस्तदनभ्युपगमे तु जडत्वानुपपत्तिरेव बाधिका ॥ अत एवाकाशादेर्न चित्त्वेन प्रतीत्यापत्तिः ॥ सत्त्वेन चित्त्वेन वा प्रतीतौ किं नियामकमिति चेत् भगवदिच्छैव ॥ तस्या एव सर्वनियामकत्वात् अन्यथा त्वन्मतेपि घटादिषु चित्त्वेन प्रतीतिः कुतो न ॥ सच्चिदानंदरूपब्रह्मकार्यत्वाविशेषात् ॥ नच मायाकार्यत्वात्तत्त्वेन प्रतीतिरिति वाच्यम् ॥ तथा सति जीवस्यापि चित्त्वेन प्रतीतिर्न स्यात्तस्यापि त्वन्मते मायाकार्यत्वात् ॥ एवं च स्वभावविशेषादेरेवानुभवासारेण नियामकत्वं वाच्यम् ॥ अत एवोक्तं-सत्ता चितिः सुखं चेति स्वभावा ब्रह्मणस्त्रयः ॥ मृच्छिलादिषु सत्तैव व्यज्यते नेतरद्वयम् ॥ सत्ताचितिद्वयं व्यक्तं धीवृत्त्योश्चोरमूढयोः ॥ शांतवृत्तौ त्रयं व्यक्तं मिश्रं प्रह्वेत्यमीरितम् ॥ तत्पूर्वं च-अनुभूत्यनुसारेण कल्प्यते हि नियामकमित्युक्तम् । तथा च नियामकस्यावश्यं त्वन्मतेप्यपेक्षणीयतयेश्वरेच्छैव नियामिकांगीकार्या किं स्वभावविशेषादिनेति ॥ धर्मरूपं ज्ञानं निरुपाधौ न किंतु सोपाधावेवेति यदुक्तं तदपि न सम्यक् ॥ येनोपाधिना सोपाधित्वं स उपाधिरपि निरुपाधौ न

स्वीकार्यः किंतु सोपाधावेवेति तादृशोपाध्योरभेद आत्माश्रयो भेदे चान्योन्याश्रया-नवस्थादिदोषप्रसंगात्तस्य निरुपाधावंगीकारे च किमपराद्धं ज्ञानरूपधर्मेणेति ॥ इति सप्तदशखंडखंडनाभासस्याभासत्वप्रदर्शनम् ॥ अथ तत्रोपस्थितहान्यादिकारणदूषणखं-ण्डस्यादेरष्टादशखंडखंडनाभासस्याभासत्वं प्रदर्श्यते ॥ यद्यप्युपस्थितहान्यादिकारणदूषणस्य वाचनिकत्वं नास्ति तथापि लोक एकमेवाचरणं परवशस्य दोषरूपं स्वतंत्रपुरुषेच्छया यदि तदेव भवति तदा न दोषरूपमिति दृश्यते ॥ यथा राजसिंहासनारोहणं भृत्यस्य दंडावहत्वाद्दोषः ॥ उक्तं च–राजसिंहासनारोढुर्दंड उत्तमसाहसः ॥ तदेव यदि राजा लीलार्थं स्वभृत्यं सिंहासनमारोहयति तदा तदेवारोहणं न दोषरूपं नापि दंडावहम् ॥ यच्छ्लोके अनुचितं तत्सर्वमीश्वरेपि दोष एवेत्येव तव निश्चयस्तदा प्राणिहिंसा लोके निंदावहा । वेदेपि "मा हिंस्यात्सर्वभूतानी" त्यादिना निषिद्धत्वाज्जुगुप्सिताऽधर्मरूपा च ॥ सा च सर्वप्राणिसंहारकर्तरि परे कुतो न दोषावहा ॥ नन्वीश्वरस्य न प्रलय-कर्तृत्वं किंतु स्वकर्मवशादेव प्राणिनां संहार इति नास्मन्ते दोष इति चेत्तदा जीववध-कर्तरि जीवेपि सा न दोषरूपा स्यात् तस्यापि स्वकर्मणैव मृतत्वात् ॥ अहं सर्वस्य जगतः प्रभवः प्रलयस्तथेति वचनविरोधश्च ॥ "जन्माद्यस्य यत" इति सूत्रविरोधश्चैवं स्यादीश्वरस्य प्रलयादिकर्तृत्वात् ॥ किंच जीवस्य परत्वामात्रात्परदुःखकरणमित्यसंगतम् ॥ ईश्वर एव दाने दानेऽन्यथाकरणे सर्वत्र समर्थ इति ज्ञानवतामस्मदीयानामनन्यभाव ईश्वर एवोत्पद्यते कर्मभिरेव फलमुत्पद्यत इति जानतां सर्वं मिथ्यैवेति जानतां तु कदापि नेश्वरे भावो निःश्रेयसे यत्नोपि न जायते प्रत्युत नास्तिक्यं यथेष्टाचरणं चेति ॥ एतेन किंचित्यादिकं सर्वं निरस्तम् ॥ राजा तु यत्र तस्य स्वातंत्र्यं तद्विषये दृष्टांतः न तु वेदादिबोधितपरलोकेपीति तत्र तस्य परतंत्रत्वान्नरकादिप्राप्तावपि न दोषः ॥ ईश्वरस्तु सर्वत्रैव स्वतंत्रस्तत्साक्षिरनुयोगपर्यनुयोगानर्हः समर्थानां कृपी-णामपि निरनुयोगपर्यनुयोगानर्हत्वं किमुतेश्वरस्य ॥ अत एव स्वतंत्रेच्छस्य मुनेर्निरनु-योगाद्यनर्हत्वादिति तवतत्रोक्तं सगच्छते ॥ त्वन्मते वैषम्यादिदोषो दुरुद्धर इत्युक्तं प्राक् त्वदुक्तं च तत्रैव दूषितं तृतीयश्लोकखंडनावसरे ॥ ननु मायामोहेनेत्याद्युक्तयेश्व-रेच्छाया मायाकृतमोहद्वारा कार्यविशेषं प्रति हेतुत्वं प्रतीयते तच्च स्वतंत्रेच्छावादि-मस्तकमते विरुद्धमिति चेदत्यल्पमिदमुच्यते । मृदादिद्वारा घटादिकं प्रति घटादिद्वारा जलाहरणादिकं प्रतीतिद्वारा तृप्तिं प्रति हेतुत्वेपि विरोधो वक्तव्यः । किंचेश्वरस्य स्वतंत्रकारणत्वे मायायाः कारणत्वे वा तत्तत्कर्मद्वारा तत्फलोत्पत्तिस्वीकर्तॄणां न दोषो नापि विरोधस्तस्माद्व्यापारेण व्यापारिणो नान्यथा सिद्धत्वमिति न्यायान्मायादीनां तत्त-त्फलोत्पत्तौ व्यापारत्वाच्च दोष इत्येव सर्वैः स्वीकरणीयमेवं च प्रकृतेपि न विरोध इति दिक् ॥ यत्तु ( स्वेच्छयैव चेत्यत्र स्वशब्दोपादानं शक्यज्ञानमूलक ) मित्युक्तं तत्तुच्छं तात्पर्यसत्वे तत्रापि बोधे बाधकाभावात्, अत एव चैत्रावलोकितं स्वपुत्रं मैत्र. पश्यती-त्यत्र तात्पर्यसत्वे चैत्रस्यैव मैत्रस्यापि बोध इत्युक्तं भट्टाचार्यैः ॥ यदि तव स्वशब्दस्य शक्तिज्ञानाभिमानोस्ति तर्हि वक्तव्यं स्वशब्दस्य कुत्र शक्तिः समभिव्याहृत इति चेत्तदा

चैत्र स्वपुत्रं पश्यतीत्यत्र यथा चैत्रस्य बोधस्तथा चैत्रभ्राता स्वपुत्रं पश्यतीत्यादावपि चैत्रबोधापत्तिः समभिव्याहृतपदस्यैकवाक्यघटकत्वातिरिक्तस्य दुर्वचनतया चैत्रस्यापि तादृशवाक्यघटकत्वात् ॥ यदि च स्वघटितवाक्यजन्यप्रतीतिमुख्यविशेष्यताच्छेदकधर्मावच्छिन्नवाचकत्वं स्वशब्दस्य स्वीक्रियते चैत्रभ्राता स्वपुत्रं पश्यतीत्यत्र चैत्रस्य तादृशधर्मावच्छिन्नत्वाभावान्न दोष इत्युच्यते तदा स्वपुत्रदर्शिनं चैत्र मैत्र पश्यतीत्यादौ चैत्रस्य मुख्यविशेष्यत्वाभावात्तद्बोधानुपपत्तिर्मैत्रबोधापत्तिश्च तस्य मुख्यविशेष्यत्वात् ॥ न च महावाक्यार्थबोधे चैत्रस्य विशेषणत्वेपि खण्डवाक्यार्थबोधे मुख्यविशेष्यत्वस्य चैत्रे सत्वात्तद्बोधानुपपत्तिरिति वाच्यम् ॥ एवमपि चैत्रेण स्वपुत्रो दृश्यते स्वव्यापकवह्निसमानाधिकरणधूमवानित्यत्र चैत्रधूमयोर्बोधानुपपत्तिर्दुर्वारैव ॥ तत्र तयोः कथंचिदपि मुख्यविशेष्यत्वाभावात् ॥ ननु स्वार्थान्वयितावच्छेदकधर्मावच्छिन्नविशेष्यतानिरूपितविशेषणतावच्छेदकधर्मावच्छिन्नस्वपदार्थघटितविशेषणविशेष्यतावच्छेदकधर्मावच्छिन्ने च शक्तिद्वयं कल्प्यते तथा च चैत्रेण स्वपुत्रो दृश्यते चैत्र स्वपुत्रं पश्यतीत्यादौ न चैत्रबोधानुपपत्तिरिति चेन्नैव चैत्रभ्राता स्वपुत्रो दृश्यत इत्यादौ चैत्रबोधापत्तिः पूर्वोक्तधूमबोधानुपपत्तिश्च दुर्वारैव ॥ किंच स्वपदार्थमज्ञात्वा तादृशधर्मयोः स्वपदार्थघटितयोर्ज्ञानासंभवेनात्माश्रयादिप्रसङ्गश्च ॥ तथा च तत्रापि अन्यथेत्यादिकं प्रलापः स्वशब्दशक्त्यज्ञानमूल एवेत्यलं विस्तरेण ॥ सेवका स्वच्छयेत्यादौ तु तात्पर्याभावादेव न राज्ञो बोधः ॥ श्रौते तु न दूषणमित्यत्र यत्त्वयोक्तं तत्पूर्वमेव निराकृतम् ॥ राजाज्ञया पर्यनुयोगानर्हत्वं तु लौकिकरीत्या न शास्त्रीयरीत्येति पूर्वमेवोक्तम् ॥ एतेन राजाज्ञयेत्यादिकं निरस्तम् ॥ जीवस्य परतन्त्रता "परात्तु तच्छ्रुतेः" रित्यादिना प्रतिपादिता ॥ ईश्वरस्य तु सर्वत्र स्वतन्त्रता "एष सर्वेश्वर एषोन्तर्यामी" त्यादिश्रुतिशतैः प्रतिपादितमिति न कश्चिदपि पर्यनुयोग इत्यवधेयम् ॥ इत्यष्टादशखण्डखण्डनाभासस्याभासत्वप्रदर्शनम् ॥ अथ यत्तट्टीकाकारेणेत्यादेरूनविंशखण्डखण्डनाभासस्याभासत्वं प्रदर्श्यते, तत्र टीकाकारोक्तपूर्वमीमांसकमतं दूषणायोपक्षिपतीत्यादिकमनूद्य तत्र दूषणं जैमिनिनेश्वरानङ्गीकारादित्यादिनोद्भावितं तदपि जैमिनिमतमज्ञात्वैव यथा व्यासमतमज्ञात्वैव जगतो मिथ्यात्वं जीवस्य कल्पितत्वमित्यादि प्रलपितं तथैव जैमिनिमताज्ञातृभिः कैश्चिद्भाट्टादिभिरीश्वरस्यानङ्गीकृतेपि पार्थसारथिमिश्रादिभिरीश्वरस्यापि सहकारित्वोपगमात्तेषामपि जैमिनिसूत्रव्याख्यातृत्वेन जैमिनिमतप्रकाशकत्वात्तदीयग्रन्था दृष्टा जैमिनिनेत्यादिदोषमुद्भावयत्युपेक्ष्य ॥ अत एव पार्थसारथिमिश्रैः स्वकृतव्याख्याने मोक्षोपि निरूपितः ॥ श्रवणमननादीनामुपयोगोप्यौत्पत्तिकसूत्रव्याख्यायां सम्यक्तया प्रतिपादितस्तट्टीकाकारेण सम्यक् तया व्याख्यातश्चेति ॥ एवं च तन्मतमभिप्रेत्यैवाय येविमामित्यादिनोपक्षेपः ॥ ग्रन्थगौरवभयात्तु तत्सर्वं नात्रोक्तम् ॥ धर्मं जैमिनिरत एवेति सूत्रेपि कर्मणा फलदातृत्वमावश्यकमतः कर्मणामेव मुख्यत्वं नेश्वरस्येत्युक्तं नैतावता ईश्वरो नास्त्येवेति ॥ ये तु विधिनिषेधाभ्यामीश्वरः प्रवर्तयति निवर्तयतीत्यङ्गीकुर्वन्ति तन्मतेऽनीश्वरवादादपि नेष्टापत्तिः संभवति ॥ तत्रान्वयव्यतिरेकस्य निश्चितत्वात् ॥ एतेन इष्टापत्तेर्मीमांसकैः कर्तुं शक्यत्वादित्यादि-

कमपास्तम् ॥ ईश्वरानंगीकर्तृमीमांसकमतस्याप्रकृतत्वात् किंचानीश्वरत्वापत्तिरूपं दूषणं त्वन्मतेपि संभवति त्वयापि कर्मसापेक्षस्येश्वरस्य फलदातृत्वं स्वीकृतम् ॥ एवं च ईश्वरस्यानीश्वरत्वमपि स्यात्तर्हि पराधीनत्वं संभवति ॥ अन्यथा जीवानामपि कुतो नेश्वरत्वम् ॥ यत्तु (तादृशशब्देन यथोचितफलदानसमर्थमित्युच्यते तर्हि लोकविरोधो जडस्य तादृशताया लोकेऽभावा) दित्युक्तं तदप्यज्ञानात् नहि लोकप्रसिद्धमेवान्यथानुपपत्त्या कल्पनीयमिति नियमस्तथा सति स्वर्गजनकस्यापि लोके प्रसिद्धत्वाददृष्टमपि न सिद्ध्येत् । लोकप्रसिद्धत्वे चापूर्वत्वहानि । एवं च वेदबोधितकारणतान्यथानुपपत्त्या यथा पूर्वं कल्प्यते तथा च यादृशे नान्यथानुपपत्ति परिहृता भवति तादृशमेव कल्पनीयमन्यथा पूर्वकल्पनं व्यर्थमेव स्यादित्याशय ॥ कल्पनाया लोकानुसारित्वे कल्प्यमानस्यालौकिकत्वानुपपत्तिरेव दोष तस्मादलौकिकी कल्पनैव लोकानुसारिणी न वैदिकीति ॥ तस्मादित्यादिना ईशप्रसादादिकं प्रत्येव कर्मणहेतुत्वमिति स्वसिद्धांत आविष्कृत सोपि तत्सिद्धांतविरुद्ध ॥ ईश्वरे सोपाधिस्वीकारे निर्धर्मकत्वहानिरीश्वरतोयस्य जन्यत्वापातश्च ॥ तोषस्यापि वृत्तिविशेषत्वाज्जन्यत्वेपि न दोष इत्युक्तौ तु "सत्यकाम सत्यसंकल्प" इत्यादि श्रुतिविरोध इति ॥ तथा चेश्वरप्रसादादिकं प्रति कर्मणा हेतुत्वासंभवादीश्वरेच्छयैव प्रवृत्तिरिति वाद्यत्वपरिहारार्थं त्वया वाच्यम् ॥ एवं च तयैव सर्वकार्यसंभवे किं कर्मभिरिति ॥ विधिनिषेधवैयर्थ्यं त्वन्मते दुर्वारमेव ॥ अस्मन्मते च वेदोक्तकरणस्यार्थकृता या मर्यादा तदनुरूपेण कर्मफलदातृत्वात्तत्कर्मकारयितृत्वाच्च न विधिनिषेधाना वैयर्थ्यं मर्यादाबोधकत्वादिति संक्षेप ॥ यदि च स्वभावस्तु प्रवर्तत इत्यस्य स्वभाव पूर्वकर्म प्रवर्तते प्रवर्तयतीत्यर्थानुसारेण कर्मणामेव प्रवर्तकत्वमित्युच्यते तदा तेषामेव हेतुत्वोपपत्तौ किमीश्वरेणेति तत्रापीश्वरसिद्धिर्न स्याज्जडस्य चेतन विना फलजनकत्व नास्तीत्यपि दृष्टानुसारिणस्तव न संभवति नियम जडस्यापि जलस्य कूलादिपातनरूपफलजनकत्वात्तत्र प्रत्यक्षस्य चेतनस्य सहकारिणोऽभावात् किंच "एष असाधु कर्म कारयती"ति श्रुतौ न कर्मभि संतुष्ट कारयतीति बोधजनकं पदमस्ति येन त्वदुक्त भगवान् कारयतीत्यर्थ स्यात् ॥ एवं च कर्मभिरीश्वरतोषस्तेनेश्वरस्येच्छा तया च कर्मकरण तेन फलोत्पत्तिरित्येव परंपराकल्पन तु गौरवापादकत्वादयुक्तमेव ॥ यत्तु बालाना केषाचित् पित्रादिवाक्य तद्वाक्यप्रयोजकज्ञानहेतुशास्त्र या प्रवृत्तिनिवृत्तिजनक केषाचित्तु संस्कारद्वारा पूर्वजन्मसंचितशास्त्रज्ञान तथेति न दोष इति तन्मन्द कृतप्रयत्नापेक्षेति सूत्रे बालस्य दृष्टांतत्वेनोपादान नतु सर्वेषा बालाना येन यथाचिदित्यादित्वत्कल्पित संगत स्यात् ॥ तथा च यस्य बालस्य प्रवृत्ति पित्रादिवाक्यात्तत्समता तस्यैव दृष्टांतत्वसंभवेऽधिकं व्यर्थमेव ॥ तद्वाक्यप्रयोजकज्ञानहेतुशास्त्रस्य बालप्रवृत्तिहेतुत्वं न संभवति ॥ कार्यान्वयरहितप्रावक्षणावच्छेदेन कार्यसमानाधिकरणाभावप्रतियोगितानवच्छेदकधर्मवत्त एव कारणत्वादन्यथा पाकादिकं प्रति तंडुलादिसंपादनद्वारा चैत्रस्यापि हेतुत्वसंभवान्मैत्रस्य तंडुल पचति मैत्र इत्यादौ चैत्र पचतीत्यादिप्रयोगापत्ति ॥ चैत्रो मैत्रेण पाचयतीत्यादिस्थले च चैत्र पचतीति प्रयोगापत्तिस्तस्यापि परंपरया पाकादिहेतुत्वात्तस्मात्तादृशस्थले मैत्रप्रयोजक-

व्यापारस्य पाकादिकं प्रत्यन्यथासिद्धत्वमेव वक्तव्यम् । एवमत्रापि पित्रादिवाक्यव्यव हितस्य तत्प्रयोजकज्ञानव्यवहितस्य शास्त्रस्यान्यथासिद्धत्वमेव ॥ कार्याव्यवहितप्राक् क्षणावच्छेदेन कार्याधिकरणे तदभावस्य सत्त्वात् ॥ न च स्वजन्यज्ञानजन्यवाक्यार्थ विषयकज्ञानवत्त्वसंबन्धेन बालप्रवृत्त्यव्यवहितप्राक्क्षणेपि शास्त्रस्य सत्त्वात्तस्य कारणत्वा नुपपत्तिः नच साक्षात्संबन्धेन कार्याधिकरणवृत्तेरेव कारणत्वमिति वाच्यम् ॥ दण्डस्य घटकारणत्वानुपपत्तेः तस्यापि घटाव्यवहितपूर्वक्षणावच्छेदेन घटाधिकरणे कपाले स्वजन्यभ्रमीजन्यता संबन्धेन वर्तमानत्वात्तस्य साक्षात्संबन्धत्वाभावादिति चेन्न ॥ अवश्य क्लृप्तनियमपूर्ववृत्तिन एव कारणत्वं तद्भिन्नस्य चान्यथा सिद्धत्वम् ॥ अवश्यक्लृप्तत्वं च लघुभूत एव नतु गुरौ गुरुत्वं चोपस्थितिकृतं क्वचित्संबन्धकृतं क्वचिच्छरीरकृतम् ॥ अत एव दण्डरूपस्य न कारणत्वम् ॥ तस्य स्वाश्रयजन्यभ्रमीजन्यतासंबन्धेनैव कारणत्वं वाच्यम् ॥ स च संबन्धो दण्डसंबन्धापेक्षया गुरुः । एवं च दण्डत्वं नावश्यक्लृप्तं संबन्धगौरवाद्दण्डश्चावश्य क्लृप्तः स बन्धकृतलघुत्वात्तथैव प्रकृते पितृवाक्यसंबन्धापेक्षया शास्त्रसंबन्धस्य पितृवाक्या घटितस्य गुरुत्वान्न शास्त्रमवश्यक्लृप्तं किंत्वन्यथासिद्धमेवेति नचैवं यागस्य स्वर्गं प्रति कारणत्वं न स्यात्तस्य स्वर्गपूर्वक्षणेऽभावात् परंपरासंबन्धस्य च गुरुत्वादिति वाच्यम् ॥ यागस्य श्रुतिविरोधिकारणत्वरक्षार्थं स्वजन्यपूर्ववत्त्वसंबन्धेनैव पूर्ववृत्तित्वकल्पनादित्यन्यत्र विस्तरः ॥ एतेन ( केषांचित्संस्कारद्वारा पूर्वस्य जन्मसंचितशास्त्रज्ञानं हेतु ) रिति प्रलपितमप्यपास्तम् ॥ ( मदाना कर्मणा सहायकमन्तरेण फलदातृत्वाभावाच्च विध्यादि ज्ञानापेक्षे ) ति यदुक्तं तदप्यज्ञानादेव विध्यादिज्ञानस्य प्रवृत्तिहेतुत्वेपि फलं प्रति हेतु त्वासंभवात् फलं प्रति तु त्वन्मते कर्मणामेव हेतुत्वम् ॥ अत एव विधेः प्रवर्तनात्वप्र वादोपि संगच्छते प्रवर्तना च प्रवृत्त्यनुकूलो व्यापार एव नतु फलानुकूल इति त्रिविधानि खलु कर्माणीत्यादिना कर्मत्रैविध्यं यत्प्रतिपादितं तन्निर्मूलं व्यासादिभिस्तथाऽप्रतिपादि तत्वात् यद्यपि व्यासैर्योगभाष्ये सोपक्रमं निरुपक्रमं च कर्मेति ' ततस्तयमादपरान्तज्ञा नमरिष्टेभ्यो" वेति सूत्रे कर्मद्वैविध्यं निरूपितम् ॥ तत्र ध्यानजन्मेति सूत्रं च कर्म शुक्लकृष्णयोगिनस्त्रिविधमन्येषा चतुष्पात् खल्वियं कर्मजातिरित्यादिना त्रैविध्यादिनिरू- पितं तथापि तस्य त्वदुक्ता उमात्युग्रादयो भेदा न दर्शितास्तस्मात् किंचिदेतत् एवं च पुनस्त्रिविधानित्याद्यपि स्वकपोलकल्पितमेव ॥ तत्प्रतिबंधककर्मप्रयुक्तश्चेरेच्छावशादि त्यादिना तादृशेच्छाया कारणत्वं यदुक्तं तत्कल्पनापेक्षया ईश्वरेच्छामात्रस्य प्रवृत्तिनिवृत्ति भावहेतुत्वकल्पने लाघवं वैषम्यान्दिोषस्तूद्धृत एवेति फलमुखगौरवस्यादोषत्वादिति यदुक्तं तच्च शास्त्रहृदयानभिज्ञत्वादेव ॥ तथा हि फल कार्यकारणभावग्रहः तन्मुख तदधीनं गौरवं गौरवज्ञानं तददोषो भवतीति तदर्थः ॥ एवं च कार्यकारणभावोत्तरं यद्गौरवज्ञानं तन्न कार्यकारणभावज्ञानप्रतिबंधकं भवति नतु कारणत्वग्रहकालेपि गौरव ज्ञानं न प्रतिबंधकमिति कस्यापि संमतमन्यथा गौरवस्य दोषत्वं न स्यात् ॥ अत एवोक्त व्याप्तिप्रकारेष्वन्योन्याभावगर्भैव व्याप्तिरनुमितिहेतुर्लाघवादित्यादि चिंतामणिप्रतिपा दितमपि संगच्छते ॥ त्वदुक्तरीत्या तु प्रतियागिवैयधिकरण्यादिघटितात्यन्ताभावगर्भव्या

सिद्धान्तस्यापि कारणत्वे दोषाभावात् तदसंगतमेव स्यात् ॥ एवं च कल्पनागौरवविषयमेव तत् न स्वावच्छेदकगौरवेपि ॥ शून्यवादापत्तिस्तु सर्वं मिथ्येति वदतां मतमेव न तु वैदिकानाम् ॥ यदपि जीवसृष्टिकाले कृतोन्यो मर्यादारूपो यत्प्रवृत्त्यर्थं यागादिसाफल्यमित्यादिविद्वन्मंडनोक्तमनूद्य तत्र दोष उद्भावितः । कर्मणो करणेपि तत्र फलस्यापि प्रतिजीवं सदैव विचारिततया ईश्वरेच्छया फलस्योत्पत्तिर्भविष्यत्येवेति कर्मणोन्यथासिद्धिरित्यादिना सोपि मर्यादास्वरूपाज्ञानात् ॥ नहि सृष्ट्यादावीश्वरेणेदृशी मर्यादा कृता कर्मकरणं विनापि फलं भविष्यतीति ॥ तादृशमर्यादाबोधकश्रुतेरभावात् ईश्वरकृतमर्यादाबोधक एव वेदः । अत एव यद्वेदानुसारेण कृतं तदीश्वरेच्छयैव कृतमिति तथा चेश्वरेण "ज्योतिष्टोमेन यजेत दर्शपौर्णमासाभ्यां स्वर्गकामो यजेते" त्यादिरीत्या दर्शितमर्यादाक्रमेणैव फलं विचारितमतस्तत्कर्माकुर्वतां न फलसिद्धिरिति संक्षेपः ॥ ईश्वरेच्छाभावेनैव फलाभावस्य सिद्धत्वादित्यप्यसंगतम् ॥ फलाभावेपीश्वरेच्छाया एव हेतुत्वात् ॥ त्वदुक्तस्त्वर्थो न संभवति ॥ जीवकृतप्रयत्नापेक्षः कारयतीति यदुच्यते तत्र जीवेन कृतो यः प्रयत्नः सः स्वयमेव कृतो वा ईश्वरेण कारित इति वक्तव्यम् ॥ यथा स्वयमेव पूर्वं तेन प्रयत्नः कृतस्तथैवाधुना कार्यं संपादयिष्यतीति किमीश्वरेण ॥ द्वितीये तु ईश्वरस्य प्रयोजकत्वं कृतप्रयत्नापेक्षमेवेत्यनवस्था ॥ किंच यथा चैत्रः पचति तं मैत्रः प्रेरयति मैत्रः पाचयतीति यदुच्यते तदा मैत्रो यथा तृप्त्यादिरूपं स्वप्रयोजनमुद्दिश्य प्रेरयति तथेश्वरोपि किमुद्दिश्य प्रेरयतीति प्रयोजनं वक्तव्यम् ॥ नह्याप्तकामस्य किंचिदपि संभवति तस्माल्लीलैव प्रयोजनम् ॥ एवं चास्मद्रीत्यैवार्थस्त्वयापि वाच्योऽन्यथा दोषः स्यादिति तदधीन एव कारयतीत्युक्तम् ॥ व्यापारांतरं निष्फलमिति यदुक्तं तदपि न किंचित् पूर्वं कृता या मर्यादा तदनुसारेण जीवान् प्रवर्तयतीत्यपि लीला न पर्यनुयोज्या लोके तथैव दृष्टत्वात् । राजापि लीलार्थं कृतमर्यादानुसारेण प्रवर्तयति तत्र प्रवर्तनं च योगक्षेमसाधारणमन्यथा मर्यादाभंग स्यात्तो न वैयर्थ्यम् । यत्तु आचार्यास्तु इत्युक्त्वा लिखिते ग्रंथे पुत्रादिशब्दत्रयात्कथं द्वितीयेत्यादिप्रश्नस्याच्यते अकथितं चेति सूत्रेण तत्र द्वितीया ॥ न च दुह्याच् पचदंडरुधिप्रच्छिचिब्रुशासुजिमथमुषां कर्मयुक्स्यादकथितं तथा स्यान्नीहृकृष्वहामित्यादिना परिगणितानामेवेयं संज्ञा नान्येषामन्यथा परिगणनस्य वैयर्थ्यापत्तिस्तथा च वर्णयतेस्तत्रागणनात्कथं कर्मसंज्ञेति वाच्यम् ॥ तथासति माणवकं धर्मं भाषते अभिधत्त इत्यादावपि माणवकस्य कर्मसंज्ञा न स्यात् ॥ भाषिवच्यादीनामपि तत्रागणनात् तस्मात्परिगणितधातुसमर्थानां धातूनां यत्कारकमपादानत्वादिविशेषणरूपेणाभासमानं तत्र द्वितीयेति तदर्थः ॥ तथा च वर्णयतेरपि परिगणितब्रूधातुसमानार्थकत्वाद्वच्यादीनामिव तत्कारकेपि द्वितीयोपपत्तिः । अत पूर्वोक्तमर्थनिर्बन्धने यं सहेति नच भाष्ये याचे पृथगभिक्षेर्ग्रहणाद्यर्थनिबंधनत्वमेतस्याप्यास्य इति वाच्यम् ॥ भाष्यासमस्तत्वेपि प्राचीनसमतत्वात्तादृशप्रयोगस्य साधुत्वं भवत्येव ॥ अत एवोक्तं शेखरे भाष्याद्युक्तानामत्र ग्रहणं प्राचामनुरोधेन अर्थनिबंधने यमित्यपि कैयटानुरोधेनेति । वस्तुतस्तु भाष्यादिप्रयोगस्यापीत्याह तत्र तर्कोत्रकाराः ।

न च भाष्यकर्तॄणां ऋषित्वे किं प्रमाणमिति वाच्यम् ॥ ससर्पिनागगीध्यतर्देवलोक समाश्रिता ॥ तावंत एव मुनय सर्वारंभविवर्जिता ॥ तपसा ब्रह्मचर्येण सगत्यागेन मेधया ॥ तत्र गत्वावतिष्ठते यावदाभूतसप्लवम् ॥ यतो वेद पुराणानि विद्योपनिषदस्तथा ॥ श्लोका सूत्राणि भाष्याणि यत्किंचिद्वन वाङ्मयम् ॥ इत्यादि याज्ञवल्क्यवचनस्यैव प्रमाणत्वात् ॥ एव च त एव ऋषयो लुप्तानि भाष्यादीनि प्रकटीभूय पुन प्रवर्तयंति । अत एव वेदादीना नित्यत्वमपीति सक्षेप ॥ फलदाने कर्मापेक्ष कर्मकारणे जीवकृतप्रयत्नापेक्ष इत्यादिक तु मर्यादास्वरूपप्रपच ॥ तेन अस्मिन्मते पुत्रादेश प्रयत्नाभिनिवेश किं कृत इति वक्तव्यमित्यादिदूषणमनवकाशम् ॥ सर्वस्येश्वरकृत मर्यादाधीनत्वेनेश्वरकृतत्वात् ॥ किंचेत्यादिना मर्यादामार्गे ईश्वरस्यानीशत्व यदुक्तं तदपि लोकशास्त्रानभिज्ञत्वादेव ॥ नहि लोक राज्ञा स्वकृतमर्यादानुसारेण वर्तमानाना मनीश्वरत्वम् ॥ गीताया च-न मे पार्थास्ति कर्तव्य त्रिषु लोकेषु किंचन ॥ नानवाप्तम वाप्तव्य वर्त एव च कर्मणीति ॥ एव च स्वकृतमर्यादारक्षणार्थं स्वमर्यादानुसरणेपि नेश्वरत्वहानि क्वचित्तथाकरण त्वीश्वरत्वादेवेति ॥ इत्येकोनत्रिंशखडखडनाभासस्याभासत्वप्रदर्शनम् ॥ अथ तत्र सूत्रकारेत्यादित्रिंशखडखडनाभासस्याभासत्व प्रदर्श्यते ॥ यदुक्त ( प्रकाशादिवन्नैव परा स्मरति च अनुज्ञापरिहारौ देहसम्बधाज्ज्योतिरादिवदिति सूत्रैर्यो दूषणस्य परिहार कृत स नाशित्वेन प्राप्तस्य किंत्वभिन्नतया प्रसक्तस्ये ) ति तदग्रे च अभेदश्च नाशत्वेन सभवतीति तच्च द्वैतमतानुसारेण वा न्यायमतानुसारेणेति वक्तव्य नाद्य तत्रांशांशिनोर्भेदानुपगमात् अन्यथा आरभवादापत्ति ॥ विवर्तवादे च कार्यस्या सत्वादेव भेदो न सभवति द्वितीयोपि न न्यायमतस्य तत्राप्रकृतत्वात् "अंशो नानाव्यपदेशादिति सूत्रे पूर्वमंशांशिभावस्याप्रकृतत्वान्नैयायिकैश्चांशांशिभावानभ्युपगमात् ॥ किंच-माया तु प्रकृतिं विद्यान्मायिन तु महेश्वरम् । अस्यावयवभूतैस्तु व्याप्त सर्वमिद जगदित्यादिनाऽवयवावयविभावाभ्युपगमात्तत्रावयवावयविनोर्भेदे द्वैतापत्ति स्यात् । किंच नाशित्वेन प्राप्तस्य दूषणस्य परिहार सूत्रै कृतो भिन्नतया प्रसक्तस्येति प्रलपन शारीरक भाष्यविरुद्धम् ॥ तत्र "ननु जीवस्येश्वरांशत्वाभ्युपगमे तदीये न ससारदु खोपभोगे नांशिन ईश्वरस्यापि दु खित्व स्यात्, यथा लोके हस्तपादाद्यन्यतमागतेन दु खेनांगिनो देवदत्तस्य दु खित्व तद्वत् ततश्च तत्तद्दु खेन महत्तर दु ख प्राप्नुयात् अतो 'वर पूर्वावस्थे" ति पूर्वपक्ष विधाय प्रकाशादिवन्नैव पर इत्यादिसूत्रत्रयमवतारितम् । तस्मात्तद्विरुद्धकथन त्वन्मताभिज्ञत्व द्योतयति ॥ सूत्रत्रयार्थस्त्वित्यादिना योर्थं प्रदर्शित सोप्यसगत कथमिति चेच्छृणु ॥ "यथा जीवो विद्यावेशवशाद्देहाद्यात्मभावमिव गत्वा तद्दु खेन दु ख्यहमिति मन्यत नैव पर ' इति त्वयोक्त तत्र जीव विद्यावेशोऽविद्याश्रयत्वमविद्यावच्छिन्नत्व तदभिमानित्व वा नाद्य ॥ जीवे विद्याश्रयत्वस्य त्वन्मत निषिद्धत्वात् । तदुक्त-आश्रयत्व विषयत्वभागिनी निर्विभागचितिरेव केवला ॥ पूर्वसिद्धतमसस्तु पश्चिमो नाश्रयो भवति नापि गोचर । इति ॥ एव च परस्यैवाविद्यावेश स्यान्न जीवस्य तथा च नैव पर इति सूत्रांशविरोध ॥ द्वितीयेपि ब्रह्मणोवच्छिन्नत्व सभवत्येव ॥ नहि घटाकाशो यद्घटावच्छिन्न

तदाकारो नास्तीति वक्तुं शक्यम् ॥ घटाकाशमहाकाशयोरभेदात् नापि तृतीयः विकल्पा-सहत्वात् अविद्याभिमानित्वं किमविद्याश्रयोदमित्याकारकान्त.करणवृत्त्याश्रयत्वं तत्प्रति-फलितत्वं वा नाद्यः ॥ तदाश्रयत्वस्य तदधिष्ठानत्वातिरिक्तस्य दुर्वचनत्वेन तस्य ब्रह्मण्यपि दुर्वारत्वात् ॥ जीव इव ब्रह्मण्यपि दुःखादिमत्वं तदवस्थमेव द्वितीयेपि बिंबप्रतिबिंबयो-रभेदे स एव दोषो भेदे च विवादास्पदप्रतिबिंबो नातिरिक्त इति पूर्वोक्तविरोध इत्यलं विस्तरेण ॥ एवमन्येपि दोषास्तदुक्तेर्थे बहवः संति ग्रंथगौरवभयान्नोद्भाव्यंते ॥ सूत्रार्थस्तु जीवस्यांशत्वे हस्तादिवत्तद्दुःखेन परस्यापि दुःखित्वं स्यादिति प्राप्त आह "प्रकाशादिवन्नैवं पर" इति नैव पर इति निषेधेन प्रकारभेदो बोध्यते तथा च यस्मात्परो जीववन्न तस्मा-जीववद्दुःखी न जीवस्य हि दुःखे द्विष्टत्वे नानुभवो जीवदुःखयोर्भेदात्परस्य तु दुःखे तादृशानुभवो नास्ति सर्वरूपत्वात् किंतु प्रियत्वे नानुभवोस्ति नहि स्वामित्वे द्विष्टत्वे नानुभव. तत्र दृष्टांतमाह प्रकाशादिवदिति यथा प्रकाशशैत्यादयो वह्निहिमादीनां न दुःखद्विष्टत्वे बुद्धिजनकास्तदात्मकत्वादन्येषां तु तज्जनका एवं परस्यापि ॥ तदुक्तं-- कालस्तु हेतुः सुखदुःखयोश्चेत्किमात्मनस्तत्र तदात्मकोसौ ॥ नाग्नेर्हि तापो न हिमस्य तत्स्यात् क्रुध्येत कस्मै न परस्य द्वंद्वमिति नन्वेवं सत्यप्यादीस्वेवं वक्तव्यमिति चेत्तर्हि सामर्थ्याविशेषादेव दुःखित्वाभावो बुध्येत ननु धर्मधर्मिभावादतस्तद्बोधनार्थं प्रकाशा-दिवदिति स्मरंतीति सूत्रार्थे तु न विवाद. । ननु जीवस्य भगवदंशत्वाद्विधिनिषेधाविषय-त्वेन संबंधाभावात्कथं दुःखित्वं किंच "कर्ता शास्त्रार्थवत्वा" दित्यधिकरणे ब्रह्मण आप्तकामत्वेन फलानुपयोगाज्जडस्य च ज्ञानाद्यभावेन कर्मकरस्याशक्यत्वाद्विधिनिषेध-शास्त्रानर्थक्यमाशंक्य जीवस्य कर्तृत्वमंगीकृत्य तत्परिहार. कृत सोपि विरुध्येत भगवत इव जीवस्यापि कर्तृत्वासंभवात् अंशांशिनोरभेदादिति प्राप्त उच्यते "अनुज्ञापरिहारौ देहसंबंधाज्ज्योतिरादिव" दिति यद्यपि जीवस्य भगवदंशत्वान्न स्वरूपतो विधिनिषेधवि-षयत्वं तथापि तद्देहसंबंधादागंतुकं तद्भवतीति तत्र दृष्टांत. । ज्योतिरादिवदिति यथास्मु-दकप्रभृतीना स्वतो निषेधाविषयत्वेपि शवादिसंबंधान्निषेधविषयत्वं श्रोत्रियादिसंबं-धाच्च विधिविषयत्वं तथैव जीवस्यापि देहसंबंधात्तद्विधिनिषेधविषयत्वसंभवेन फल-संबंधस्यापि सत्वात्तच्छास्त्रार्थवत्वसूत्रविरोधो न संभवति नापि कर्ममार्गान्याहतिरिति संक्षेपः ॥ यदपि ( यथाग्नेरित्यादि श्रुत्या नाशस्य बोध्यते किंतूपाधिविनिर्गमादाविर्भाव इत्युक्तं पूर्वं जीवस्य व्युच्चरणं नोत्पत्तिरिति तु न संगतं व्युच्चरतीत्यस्यैकस्य पदस्य सर्वत्र संबंधे प्राणादिषु वैलक्षण्यांगीकारस्यानुपपत्ते ) रित्याद्युक्तं तत्र सम्यक् । एकस्यापि शब्दस्य श्रुत्यंतरपर्यालोचनयान्यार्थकल्पने बाधकाभावात् ॥ यदि व्युच्चरणशब्दस्य प्राणादिव्युच्चरणसदृशव्युच्चरणार्थकत्वमंगीक्रियते तदा "अयमात्माजरोमर." "न जायते म्रियते वा विपश्चि" दित्यादिवाक्यविरोध स्यात् "किंचानेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणी" त्यादि श्रुतौ सिद्धव्यपदेशाच्च जीवस्य प्रलयेऽविभागमात्रं सृष्ट्यादौ च विभागरूपमेव व्युच्चरणं कल्प्यतेऽन्यथा त्वन्मतेपि यथा प्राणादीनां स्वस्वरूपेणोत्पत्तिर्व्युच्चरणशब्दार्थस्तथा जीवस्यापि स्वस्वरूपेणैवोत्पत्तिः स्यान्न त्वौपा-

धिकी ॥ एकस्य व्युच्चरणशब्दस्य मुख्योत्पत्त्यर्थकत्वे प्राणादौ जीवे चामुख्योत्पत्त्यर्थकत्वे आवृत्त्यादि कल्पनाप्रयुक्तं गौरवं स्यात् ॥ यदि च शाखांतरे तत्पाठाभावाद्गौण्युत्पत्त्यर्थकत्वं कल्प्यत इत्युच्यते तदाकाशस्यापि शाखांतरे पाठाभावादात्मन आकाशः संभूत इत्यत्रापि गौण्युत्पत्त्यर्थकत्वं कुतो न स्यात् ॥ श्रुत्यंतरविरोधपरिहारार्थं तथा कल्पनं तु प्रकृतेपि तुल्यम् ॥ नन्वस्मन्मते पूर्वं सर्वत्र व्युच्चरणशब्दस्य मुख्योत्पत्त्यर्थकत्वमेवेति जीवेपि मुख्योत्पत्तिविषयकशाब्दबोधे जाते पश्चाद्गौण्युत्पत्तिविषयकबोध इति भावृत्त्यादिकल्पनागौरवमिति चेन्न ॥ क्षणविलंबस्य शपथनिर्णेयत्वात् । किंच पाश्चात्यबोधस्य यदि पूर्वबोधो हेतुस्तदा प्राणादिष्वपि तथैव कथं न गौण्युत्पत्तिबोधस्तस्मान्न किंचिदेतत् ॥ यद्यपि पंचभूतप्राणादीनामप्याविर्भावतिरोभावावेव सिद्धांते स्वीकृतौ नोत्पत्तिविनाशावित्यतो भूतानादीनामपि नित्यत्वमेव ॥ तथापि जीवस्याऽस्तिप्रकारभेदे श्रुतिप्रतिपादितो नामरूपव्याकरणात्पूर्वमपि स्वस्वरूपेण सत्त्वरूपः प्रलयेप्यविभागारूपश्च विशेष इति तस्य नित्यत्वव्यवहारः ॥ न च भूतादीनामसत्त्वमेवेति वाच्यम् ॥ श्रुतौ सत्यत्वेन प्रतिपादनाद्वेदविरुद्धकल्पनायाश्चान्याय्यत्वात् ॥ एतेन यच्चित्यादिकं निरस्तं तदभिन्नाभिन्न इति न्यायस्य तु तत्त्वं पूर्वखंड एवोक्तम् ॥ धर्मधर्मिणोरभेदे धर्मान्यथाभावे धर्मिणोप्यन्यथाभावकल्पने शब्दनाशे गगनस्यापि त्वन्मते नाशापत्तिस्तस्माद्धर्मान्यथाभावेपि न जीवान्यथाभाव इति ॥ तेन धर्मेत्यादिदूषणमनवकाशं न चैवमपि जीवस्य ब्रह्मणः सकाशाद्विभागस्वीकारे ब्रह्मणः परिच्छिन्नत्वापत्तिर्विभागो हि अपादानरहिते देशे गमनं तच्च विभुत्वेन संभवतीति चेन्मैवं यदि विभागस्येदं लक्षणं स्यात्तदा त्वदुक्तो दोषोपि स्यात् । गमनस्य क्रियारूपत्वाद्विभागस्य क्रियारूपत्वमेव स्यात्तस्मान्नेदं लक्षणं किंतु संयोगनाशको गुणो विभाग इत्येव तल्लक्षणं तच्च किंचिद्देशसंयोगनाशे संभवतीति खात् खगो विभक्त इति प्रतीतेः ॥ नच तादृशप्रतीतिर्न प्रमाणसिद्धेति वाच्यम् ॥ तथा सति खगश्चलतीति प्रतीतिरपि न स्यात् पूर्वसंयोगनाशोत्तरदेशसंयोगौ विना क्रियाया अप्रामाणिकत्वात् क्रियायास्तज्जनकत्वनियमात् ॥ तत्र चायं क्रमः–पूर्वं क्रिया क्रियातो विभागस्ततः पूर्वसंयोगनाश उत्तरसंयोगोत्पत्तिः । एवं च खगश्चलतीत्यादि प्रतीतेः प्रामाण्यानुरोधेन पूर्वदेशविभागोप्यंगीकार्यः ॥ सच गगनादेव तत्र देशांतराभावात् ॥ एवं खात् खगो विभक्त इति प्रतीतेः प्रामाण्यं निष्प्रत्यूहम् ॥ नच खगसंयुक्ते गगने कथं तद्विभाग इति वाच्यम् ॥ संयोगविभागयोः प्रादेशिकत्वे नाविरोधात्, उक्तं च–अथ प्रादेशिको भवेद्वैशेषिको विभुगुणः संयोगादिद्वयं तथेति ॥ स्पष्टोक्तेर्दुर्बोधत्वं वदंस्तूपहास्य इति यदुक्तं तत्र जीवस्यापि प्राणादिवदुत्पत्तेः श्रुतत्वाज्जीवस्य नित्यत्वं प्राणादीनामनित्यत्वमित्यर्थस्य संशयास्पदत्वाद्दुर्बोधत्वम् ॥ यदि चास्य स्पष्टत्वमेव तवाभिमतं तदा स्पष्टे संशयाभावात्तत्र सशयं कुर्वन्नुपहास्य इवैकत्रौपाधिकत्वं स्वीकुर्वन्नपि तथैव । अत एव यथा प्रदीप्तात्पावकादित्यादिना दृष्टांतप्रदर्शनमपि साधु संगच्छतेऽन्यथा स्पष्टेर्थे दृष्टांतप्रदर्शनस्य व्यर्थत्वादसंगतमेव स्यात् ॥ एवं च यथा अग्नौ विस्फुलिंगस्य सत एव तस्मात्प्रविभागोऽप्यपेक्षयाणुत्वमग्ने-

स्तदपेक्षया महत्वमेवं जीवस्य सत एव विभागो ब्रह्मापेक्षयाणुत्वं ब्रह्मणस्तदपेक्षया महत्वं च दृष्टांतेन बोध्यते ॥ नच जीवस्यापि महत्वात् कथं तदपेक्षया महत्वमिति वाच्यम् ॥ अंशांशिनोरभेदेपि न्यूनाधिकभावस्य दृष्टत्वात् ॥ अत एव सूत्रकारेणाप्युक्तं "अधिकं तु भेदनिर्देशा" दिति अथाधिकं त्वित्यादिसूत्रेण ब्रह्मणि महत्परिमाणत्वं न प्रतिपाद्यते किंतु "इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्ति" रिति पूर्वसूत्रेण कृतस्य जीवस्य ब्रह्मात्मव्यपदेशाद्ब्रह्मणः कर्तृत्वे जीवस्यैव कर्तृत्वपर्यवसानात् तेन स्वहितमेव कर्तव्यमिति हिताकरणं दोष इत्यादिपूर्वपक्षस्य "सोऽन्वेष्टव्यः स विजिज्ञासितव्य" इत्यादिरूपभेदव्यपदेशादशरणादिगुणविशिष्टाज्जीवादुत्कृष्टं सर्वज्ञत्वादिगुणकं जगत्कर्तृमायोपाधिकमित्यर्थेऽन्न तेन सूत्रेण निरासः क्रियत इति चेन्नैवम् ॥ अधिकपदस्योत्कृष्टार्थकत्वे भाष्यविरोधापत्तेस्तत्र हि शारीरादधिकमन्यद्ब्रूयं जगत्कारणं ब्रूम इत्युक्तं तावतापि परस्तु भेदव्यपदेशादिति भिन्नं तु भेदवदित्येतावदुक्त्यैव सामंजस्य अधिकं त्वित्यादिगुरतरारंभो व्यर्थः स्यात् ॥ तस्मादधिकपदस्वारस्यादंशित्वरूपमाधिक्यं भेदश्च बोध्यत इति मन्तव्यम् ॥ तथा च तुशब्दः पूर्वपक्षं व्यावर्तयति भेदव्यपदेशात् एवं च यथा वेदेऽभेदव्यपदेशस्तथा भेदव्यपदेशोपि ॥ स च आधिक्ये पर्यवस्यति आधिक्यं चांशित्वात्पूर्णश्चांशस्य हि तमेव करोतीति न नियमः ॥ स्वदेहेपि नखनिकृंतनकेशप्रसाधनादेर्दर्शनात् किंतु स्वलीलया हितमहितं च करोति अधिकं तु भाष्यादितोवसेयम् । अपीति गमनार्थको नतु लयात्मक इति यदुक्तं तच्छारीरकभाष्यानवलोकनात् तत्रापि 'पूर्वस्यैतैलेयार्थत्वं प्रसिद्धं प्रभवाप्ययौ' इत्युत्पत्तिप्रलये प्रयोगदर्शनादित्युक्तं स्वाप्ययादिति सूत्रे दृष्टान्ते सर्वत्रोपादानेन संबंधाभावे क्वचित्संबंधदर्शनात्तद्योग्यत्वोक्तिर्न विरुध्यते नतु कैवल्ये मानाभावादिति प्रलपनं कैवल्याज्ञानात् "अस्मिन्नस्य च तद्योगं शास्ती" ति सूत्रेण च जीवस्य ब्रह्मणि प्राप्तिरुक्ता ॥ तत्र यदुक्तं यदि पूर्वं ब्रह्मभावो भवति पश्चात्प्राप्नोतीत्यर्थस्तर्हि निर्मूलगौरवमिति तदज्ञानात् 'ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति ॥ समः सर्वेषु भूतेषु मद्भक्तिं लभते परामित्युक्त्वा विशते तदनंतरमिति भगवतैवोक्तत्वेन तद्वचनस्यैव मूलत्वात् ॥ यदपि विशते तदनंतरमित्यस्य भेदं गच्छतीत्यर्थ इत्युक्तं तत्तुच्छं विश्धातोस्तादृशार्थकत्वे मानाभावात् ॥ श्रौतदृष्टान्तस्य "यथा सैंधवखिल्य उदकप्रास्त उदकमेवानुविलीयत" इत्यादिना प्रदर्शितस्योपरोधापत्तेर्नहि सैंधवोदकयोरभेद एव सर्वात्मना संभवति, तस्मादविभाग एव ॥ भिन्नत्वेन प्रतीतिराहित्यनिरूपणेऽभेदप्रतीतिरवशिष्यते जडत्वं वा तथा च चेतने जडत्वस्यासंभवादभेदप्रतीतिरर्थादवशिष्यते सैव यथा सवमपामित्यादिना निरूपिता अत एव तथा हीत्युपपादनमपि संगतं नापि पूर्वापरविरोधः एवं च तत्तद्दृष्टान्तानुरोधेन जीवानामत्यन्तविलक्षणत्वमत्यन्ताभेदोपि च न स्वीक्रियते किंत्वंशांशिनोरिवाभेदः अत एव "गतिसामान्या" दिति सूत्रेण व्यासैरेतादृशाभेद एव दर्शितः तदर्थस्तु श्रुत्यागतौ मोक्षे "निरञ्जनः परमं साम्यमुपैती" त्यादिना समानभावस्य सामान्यस्य निरूपणादित्यादिरूपः न च सामान्यस्य तुल्यरूपत्वात्तुल्यत्वस्य भेदघटितत्वात्तुपष्टंभासंगतिरिति

वाच्यम् ॥ श्रुतौ परमपदसमभिव्याहारेण भेदाघटितसादृश्यस्यैव साम्यपदार्थत्वादन्यथा निरञ्जन साम्यमुपैतीत्येतावतैव सामञ्जस्ये परमपद व्यर्थमेव स्यादेव तत्पदस्वारस्याद विभागरूप साम्यमेव श्रुतिप्रतिपादितमिति सूत्राभिप्राय यदि साम्य भेदघटितमेवेति तत्राग्रहस्तदा तादृशश्रुत्यनुसारेण मोक्षावस्थाया माध्वादिवत्त्वयापि भेद एव स्वीक्रियेत एव चाद्वैतं दत्ततिलाञ्जलि स्यात् । न च सप्तमीसमासस्यानाकारत्वाद्वतौ समासो सगत इति वाच्यम् ॥ तस्याप्याकरे तुल्यास्यसूत्रे ध्वनितित्वे नानाकारत्वकथनस्याकराना लोचनविजृम्भितत्वात् सामान्यादिति तस्मादित्यादिना त्वया प्रतिपादितो य सूत्रार्थं स च न सगत प्रधानादीना द्वितीयेध्याये निराकरणीयतया "ईक्षतेर्नाशब्द"मिति सूत्रे च प्रधानस्याप्रकृतत्वेन तन्निराकरणार्थं गतिसामान्यादिति सूत्रव्याख्यानेऽप्रकृत प्रसगपौनरुक्त्यादिदोषापत्ते ॥ ब्रह्मणो जीवापादानत्वोक्तिरसगतेत्यादिप्रलापस्तु स्वमत परमतानवलोकनमूलक ॥ त्वन्मतेपि ब्रह्मण सर्वोपादानत्वस्वीकारात् ॥ "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधा"दिति सूत्राच्च सर्वोपादानत्वेपि यथा ब्रह्मणो नान्यत्वमेव जीवो पादानत्वेपि ॥ नचास्मन्मतेऽध्यासाधिष्ठानत्वमेवोपादानत्व ब्रह्मणस्तथा चाध्यासस्या नित्यत्वेपि नाधिष्ठानस्य तथात्व शुक्त्यादौ तथा दर्शनादिति चेन्न ॥ यथा सौम्येकेन मृत्पिंडेनेत्यादिना शुक्तिरजतादिदृष्टान्त त्यक्त्वा मृत्पिण्डादिदृष्टान्तोपादानेन ज्ञानदृशोपादा नत्वस्य वेदविरुद्धत्वात् शुक्तिज्ञानेपि रजतादिज्ञानाभावेन एकविज्ञानेन सर्वविज्ञान प्रतिज्ञोपरोधाच्च ॥ नहि सत्यज्ञाने सति यावदनृत ज्ञात भवति ॥ अस्मन्मते च ब्रह्मण उपादानत्वेपि न विकारत्वमित्युक्त प्राक् ॥ अवतारसमय इव सर्वदा ईश्वर इत्यादिक त्वस्मन्मताज्ञानविजृम्भितमिति यदि च शास्त्रज्ञकल्पना निर्मूला तदा त्वन्मतेपि कि मूल-मिति वक्तव्य वेदश्चेदस्य त्वत्समतार्थकत्वे मानाभाव इत्यन्यत्र विस्तर । यत्तु ( "मुक्तो पसृप्यव्यपदेशा' दिति सूत्रे नि सरण कस्य शब्दस्यार्थ ) इत्युक्त तदपि विद्वन्मण्डन-पत्तयाभिप्रायाज्ञानात्तत्र स्वावतारसमये क्रीडार्थं साक्षाद्योग्यास्तदाविर्भवतीत्युक्त तत्रैव "मुक्तोपसृप्यव्यपदेशा' दिति सूत्र प्रमाणतयोपन्यस्तम् ॥ मुक्ताना भगवद्भाव प्राप्ताना देहाद्यध्यासरहिताना या भगवन्निकटवासयोग्यता तस्यापदेशो व्यपदेशस्त स्मादित्यर्थ किं तत् सूत्र भगवत्क्रीडायोग्यताया प्रमाण तदर्थस्त्वित्यादिना योऽर्थ प्रदर्शित स तु तन्मतविरुद्ध ॥ नामरूपविनिर्मुक्तैरपसृप्य यत्तस्य व्यपदेशादिति तदर्थे नामरूपविनिर्माकस्य सोपाधिके सभवान्निरुपाधिके चोपसर्पणासभवादसगति ॥ "न तस्य प्राणा उत्क्रामति ब्रह्मैव सन् ब्रह्माप्येती' ति श्रुतिविरोधश्च ॥ क्रममुक्तिविषयत्वेन नामरूपविनिर्मोकासभवश्चेति सक्षेप ॥ मुक्त्यपेक्षया भक्तेराधिक्य तु मुक्तिं ददाति कर्हिचित् स्म न भक्तियोगमित्यादिना पूर्वमेव विस्तरेणोपपादितमिति ॥ यच्च मुक्ता अपि लीलाविग्रह कृत्वा हरिं भजत इत्याद्युक्त्वा तर्हि तत् क्रममुक्तिपरमिति यदुक्त तदपि न सम्यक् ॥ तेषा त्वन्मते विग्रहवत्त्वस्वीकारेण लीलाविग्रहो निरर्थक स्यात् ॥ किच-आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे ॥ कुर्वन्त्यहैतुकीं भक्तिमित्थभूतगुणो हरि रित्यादिना ज्ञानिनामात्मारामाणा शुकदवादीनामपि भक्तेरुक्तत्वात् भक्तेर्ज्ञानादाधिक्य

प्रतीयते ॥ नहि ब्रह्मलोक प्राप्त स्वर्गमीहते ॥ यदि ज्ञानस्य भक्तेर्न्यूनता स्यात्तदा ज्ञानिनस्तत्रेच्छैव न स्यात् अशरीरमित्यादि वाक्य तु ब्रह्मपरम् ॥ अत एव मत्वा धीरो न शोचतीति तद्वाक्यदोष उक्तम् ॥ शरीरत्वावच्छिन्नाभावबोधादित्यप्यसगतम् ॥ तथा हि शरीरत्वावच्छिन्नाभाव कुत्र बोधनीय जीवे ब्रह्मणि वा नाद्य कैवल्यमुक्तौ जीवस्य ब्रह्मातिरिक्तस्याभावात् ॥ नापि द्वितीय ॥ एक जीवस्य मुक्तावपि तदतिरिक्तजीवशरीराणा ब्रह्मणि सत्वेन शरीरत्वावच्छिन्नाभावस्य वक्तुमशक्यत्वात् न च कदिरतस्य त्रैकालिकनिषेधप्रतियोगित्वात्तदभावो ब्रह्मण्यबाधित इति वाच्यम् ॥ तथा सति कैवल्यमुक्तावित्यसगत तस्य सार्वदिकत्वात् ॥ एकजीववादस्तु निर्मूलत्वादुपेक्षणीय इत्यास्ता प्रविस्तर ॥ जीवस्यासत्व क्वापि न पठितमित्यादि तु "ममैवांशो जीवलोके जीवभूतः सनातन" इत्यादिगीतावाक्यानालोचनमूलकम् ॥ गीता न प्रमाणमिति चेदुपेक्ष्योऽसि जीवस्य ब्रह्मणा सहोपादानोपादेयभावरूप एव सबध स च श्रुत्युक्त इति एतेन जीवस्य ब्रह्मणा सह क सबध इति निरस्तम् ॥ इति विंशखण्डखण्डनाभासस्याभासत्वप्रदर्शनम् ॥ अथ विभागादिकमित्यादेरेकविंशतिखण्डखण्डनाभासस्याभासत्व प्रदर्श्यते ॥ यदि विभागादिक जीवेऽनुपपन्नमिति ब्रूषे तदा प्रतिबिंबोऽवच्छेदो वा विभो कथमुपपन्नो येन तत्स्वीकरोषि ॥ न चाकाशस्य विभोर्घटादिना परिच्छेदो जलादौ च प्रतिबिंबो दृश्यते तदनुरोधेन ब्रह्मणोऽपि तावदगीक्रियत इति वाच्यम् ॥ गगनस्य प्रतिबिंबे मानाभावात् ॥ प्रतीतिस्तु तलमालिन्यादिवद्भ्रमरूपैव ॥ एव विभुत्वावच्छिन्नत्वयोर्विरोधादवच्छेदोऽपि न सभवतीति ॥ किंच अंशत्वे विभागे च श्रुतिस्मृती प्रमाणत्वेन दर्शिते सूत्रमपि ॥ प्रतिबिंबावच्छेदयोस्तु न किंचिदपि प्रमाणमस्ति—अनादृत्य श्रुतिं मौर्ख्यात्केवला युक्तिमाश्रित इति न्यायावतारस्तस्माच्छब्दैकगम्येऽर्थे शब्द एव प्रमाण न युक्ति सत पाण्यादय उपाधिपरिकल्पिता इत्यप्यसगतम् ॥ तत्रोपाधिवाचकपदाभावात् ॥ "अपाणिपादो जवनो गृहीता" इत्यादिश्रुतिस्तु सर्वभवनसमर्थत्वाद्ब्रह्मण उपपद्येताचिंत्यानन्तशक्तिमत्वाच्च यद्यद्वेदेन प्रतिपाद्यते तत्सर्वमेव तस्मिन्सगच्छत इत्यसकृदेवोदितम् ॥ किंच स्वप्रकाशे ब्रह्मणि यथाऽविद्यानुपपन्नाऽपि त्वया कल्प्यतेऽसत्या मायाप्रतीतिस्तथैवात्रापि प्रवेशनिर्गमनस्वीकारे कथ विरोध कथ वाऽनुपपत्ति ॥ अस्माभिस्तु श्रुतिस्मृत्यनुसारेण सर्व स्वीक्रियते ॥ परिभाषा तु नदीवृक्षादिवद्दारुरूपमज्ञान सत्तात्रैविध्यमित्यादि यत्त्वया स्वकपोलकल्पित स्वीक्रियते तदेव ॥ त्वन्मते च विशते तदनन्तरमिति भगवद्वाक्यविरोध औपाधिकस्य जीवस्य प्रवेशासभवात् न चोपाधिनाश एव प्रवेश इति वाच्यम् ॥ नष्टे प्रविष्ट इति व्यवहारोपपत्ते ॥ किंच प्रवेशोऽप्यय पारिभाषिक एव स्यात् ॥ नहि लोके एतादृशप्रवेश क्वचिद्दृश्यते ॥ अश्व इवाश्व इति वत् प्रवेश इव प्रवेश इति लक्षणाकल्पने तु गौरव स्यात् किंच त्वन्मते सर्वेष्वेव वेदान्तेषु ब्रह्मप्रतिपादकेषु लक्षणैव ॥ एवं च वेदस्य मुख्यार्थता न कुत्रापीति दिक् ॥ यत्तु (आचार्योपदेशात् प्राक्तनविद्याया सत्वाच्छाब्दानुपपत्तिस्तदवस्थैव बाधज्ञानस्य शाब्दप्रतिबध-

कत्वा ) दित्युक्त तन्मदम् ॥ अविद्यासत्वेऽज्ञानमेव भवति न बाधज्ञान यदि च विद्या या अपि शाब्दज्ञानप्रतिबधकत्वमभिमत तदाऽज्ञानविषयेऽविद्याप्रतिबधाज्ज्ञाते तु समानविषयकप्रत्यक्षसामग्र्या प्रतिबधाच्छाब्दबोध कुत्रापि न स्यात् ॥ नन्वविद्यया न शाब्दप्रतिरोध उच्यते येनोक्तदोष स्यात्किंतु तज्जन्यविपरीतभावनया बाधरूपयेति चेन्न तादृशबाधज्ञानस्यापि शाब्दबुद्धिप्रतिबधकत्वागीकारे नास्ति दशम इति ज्ञानस्यापि दशमस्त्वमसीति वाक्यजन्यबुद्धिप्रतिबधकत्वापत्ति ॥ तथा च तज्जन्यप्रत्यक्षस्यासभवेन दृष्टातासिध्या 'तत्वमसी'' त्यादौ शब्दात्प्रत्यक्ष सभवतीति स्वत्सिद्धातो व्याकुप्येत ॥ वस्तुतस्तु प्रत्यक्षस्येंद्रियादिदोषकवलितत्वात्तदपेक्षया वेदस्य निरस्तसमस्तदोपस्य प्रबलत्वाच्च तेन तद्वाध उद्भावयितु शक्य "यजमान प्रस्तर" इत्यादावपि यजमानप्रस्तरयोरभेदागीकारे प्रस्तरस्याग्नौ प्रक्षेप स्यादग्नेर्वेदेन प्रतिपादितत्वात्तत्र यजमानस्य प्रक्षेपे तदुत्तर यजमानकर्तव्यस्य वेदप्रतिपादितस्य लोपापत्तिरिति वेदोक्तार्थानुपपत्त्यैव तत्र लक्षणा नतु प्रत्यक्षस्य बाधकत्वानुरोधेनेति ॥ एतेन यजमानप्रस्तर इत्यादिकमपास्तम् ॥ यदपि ( आचार्यवान्पुरुषो वेदेति तु श्रवणाद्यगतया गुरूपसत्तिं विधत्ते नतु ब्रह्मज्ञानासाधारणकारणतये )ति प्रलपित तच्छास्त्रहृदयानभिज्ञत्वादुद्देश्यविधेयभावादिमर्यादानभिज्ञत्वाच्च ॥ तथाहि मलिन ते वपु स्नाया धनवान्सुखीत्यादौ शरीरमालिन्यादेरुद्देश्यस्य सिद्ध साध्यायोपयुज्यत इति न्यायात्स्नानादिरूपविधेये हेतुत्वमिति सर्वसमत उद्देश्यविधेयभावस्थले चोद्देश्यवचन पूर्वं विधेयस्य तत परमित्यपि नियम ॥ तथा चाचार्यवान्पुरुषो वेदेत्यादौ कथ गुरूपसत्तेर्विधेयत्व कथ वा ब्रह्मज्ञानकारणता तस्यानेतीति कुत्रचित् सहकार्यसमवधाने स्वीकृताचार्याणा ज्ञानाभावेपि न तस्य कारणत्वहानिरन्यथा पुरुषभृदायसमवधाने दडादितो घटाद्यनुत्पत्त्या तेषामपि कारणत्व न स्यात् ॥ "श्रुतेस्तु शब्दमूलत्वा" दित्यस्य त्वदुक्त एवार्थोऽसदुक्तस्तु न इत्यत्र विनिगमनाविरह ॥ किंच त्वदुक्तेर्थे उपाधितो जगत्कारणमपि ब्रह्मवस्तुतो निरवयवमित्याद्यध्याहारकल्पने गौरवम् ॥ श्रुतेरित्यस्य निरवयवत्वबोधकश्रुतेरित्यर्थे लक्षणाकल्पनेन गौरवम् ॥ अस्मन्मते दोपस्यानुद्भावितत्वात् प्रज्ञाहीनत्व च निंदकत्वादासुरत्व द्योतितमित्यलम् ॥ इत्येकविंशतिखडखडनाभासस्याभासत्वप्रदर्शनम् ॥ अथ तत्र समवायागीकार एवेत्यादि द्वाविंशतिखडखडनाभासस्याभासत्व प्रदर्श्यते ॥ समवायसत्त्व इत्याद्युक्त्वा तादृशस्त्वाप्यगीकार इत्यादिप्रलापस्त्वसदुक्तार्थानवबोधात् ॥ नह्यस्माभि समवायोगीक्रियते किंतु गघस्थलेऽवयवसत्वादिन प्रत्युच्यते यदि त्वया समवेतस्यापि समवायिन विना स्थितिर्नागीक्रियते तदा घटे नष्टेपि घटरवस्य स्थित्यर्थं सूक्ष्मो घटोंगीकर्तव्य इति तस्माद्यथा घटत्वस्थिति प्रलयकालादौ तथा गधस्यापि स्थिति कुतो नेति नैतावता समवायोगीकार विनश्यदवस्थाना तदुत्तरक्षण गुणास्तिष्ठन्तीत्यपि दृष्टातविधयैवोक्तम् ॥ गुणगुणिनोरभेदादित्यप्यसगतम् ॥ गुणनाशेपि गुणिन प्रत्यभिज्ञाबलात्तन्नानगीकारादेकस्मिन्नेवाम्रादौ रूपरसादीनामाविर्भावनिरोभावेप्याम्रादीना तिरोभावादर्शनेनात्यताभेदस्य वक्तुमशक्यत्वात् ॥ नच रसादीनामुत्पत्तिविनाश आम्रादीनामप्यु-

त्पत्तिविनाशौ स्वीक्रियेत इति वाच्यम् ॥ तदेवेदं फलमित्यादिप्रत्यभिज्ञाविरोधात् ॥ यदि च क्षणिकवाद एव तवाभिमतस्तदा व्यासाद्युक्तयुक्त्या तन्मतनिरासेनैव निरस्तत्वादुपेक्षणीयोसि ॥ अन्यद्यत्त्वयोदितं तत्सर्वं विस्तरेण पूर्वखण्ड एव दूषितम्, किंच "हृदि ह्येष आत्मे" त्यादिश्रुत्या आत्मनो हृदयस्थानं प्रतिपादितं यदि जीवस्य सर्वगतत्वं स्यात्तदा सर्वत्र इत्येवं प्रतिपादितं स्यात्तस्मादणुरेव ॥ ननु हृदयस्य बुद्धिस्थानत्वाद्बुद्ध्युपाधिकस्य जीवस्यापि तत्स्थानं भवत्येवेत्युपचारादेव जीवस्य स्थानं श्रुतिराहेति चेन्नैवम् ॥ यथा सर्वगतस्यात्मनो बुद्ध्यवच्छिन्नत्वं तथा हृदयावच्छिन्नत्वमपि किंच यथा घटावच्छिन्नस्याकाशस्य मठावच्छिन्नत्वं तथा बुद्ध्यवच्छिन्नस्य हृदयावच्छिन्नत्वाभ्युपगमेऽपि मुख्य एवार्थे संभवति गौणार्थकल्पनं श्रुतीनां मुख्यार्थे विद्वेषप्रयुक्तमेवेति कृतं विस्तरेण ॥ इति द्वाविंशतिखंडखंडनाभासस्याभासत्वप्रदर्शनम् ॥ अथ प्रज्ञाशब्देन बुद्धिरेवेत्यादेस्त्रयोविंशतिखंडखंडनाभासस्याभासत्वं प्रदर्श्यते ॥ प्रज्ञाशब्देन बुद्ध्युपादानं तु त्वन्मत एव न युज्यते सर्वव्यापकस्य स्वत एवारूढत्वात् प्रज्ञायास्तत्र कारणत्वासंभवात् "प्रज्ञया शरीरं समारुह्ये" ति श्रुतौ तृतीयानुपपत्तिः ॥ नच प्रज्ञयैव संबंधो नान्येनेति वाच्यम् ॥ आकाशवत्सर्वगतश्च नित्य इत्यादिश्रुत्युक्तसर्वगतत्वानुपपत्तेः ॥ अस्मन्मते तु जीवस्याणुत्वा"दालोमभ्य आनखाग्रेभ्य" इति श्रुत्युक्तसर्वशरीरव्यापकत्वस्य स्वतोऽसंभवाच्चैतन्येन शरीरव्याप्तिः श्रुत्या प्रतिपाद्यते ॥ अत एव "तथा च दर्शयति पृथगुपदेशा" दिति सूत्राभ्यां व्यासैरप्येवमेवार्थः स्पष्टीकृतः ॥ यच्च ( पृथगुपदेशाविति सूत्रं उत्क्रांतिगत्यागतीनामित्यादिपूर्वपक्षसूत्रसमूहस्थमिति न दोषावह ) मित्युक्तं तत्र यदि तादृशसूत्राणां पूर्वपक्षरूपता स्यात्तदा स्यादेवायं तव मनोरथः तदेव तु न संभवति तादृशसूत्राणां पूर्वपक्षपरत्वे जीवस्यौपाधिकत्वं मिथ्यात्वं च सिद्धांते स्यादथ वा उपाधेरेव नाशाभ्युपगमे ब्रह्मैव जीवरूपं स्यात् तदेतत्सर्वं न वेदसंमतं यतः "सर्वे वेदा यत्पदमामनंति तं त्वौपनिषदं पुरुषं पृच्छामि" वेदैश्च सर्वैरहमेव वेद्य इत्येवंरूपाभिः श्रुतिस्मृतिभिर्वेदतात्पर्यविषयं ब्रह्मैवेति सर्ववेदांतानां ब्रह्मपर्यवसायित्वमविवादं ब्रह्म च जगत्कारणाद्यसाधारणधर्मैर्जीवविलक्षणमित्यसकृदेवोक्तं तत्र यदि "नात्माश्रुते" रित्यादिसूत्रानुरोधेनोत्पत्त्याद्यश्रवणाज्जीवस्य नित्यत्वान्यथानुपपत्त्याऽद्वैतश्रुत्यनुरोधेन जीवब्रह्मणोरैक्यमौपाधिक एव भेदः स्वीक्रियते तदा तादृशप्रतिज्ञाया अंशांशिभावेन नित्यत्वस्य च व्युच्चरणाविभागेनाप्युपपत्तौ तादृशप्रयासो विफल एव ॥ न चांशांशिभावे निष्फलत्वश्रुतिविरोध इति वाच्यम् ॥ "श्रुतेस्तु शब्दमूलत्वा" दिति न्यायानुरोधेन विरुद्धधर्माश्रयत्वस्य धर्मिग्राहकश्रुतिरूपमानसिद्धत्वादेव सकलदोषपरिहारसंभवात् ॥ नापि निर्गुणश्रुतिविरोधस्तस्याः प्राकृतगुणनिषेधपरत्वात् ॥ नच "तत्सृष्ट्वा तदेवानुप्राविश" दित्यादि श्रुत्या प्रवेशश्रवणात्परमेव ब्रह्मजीव इति वाच्यम् ॥ तत्र न तस्यैव प्रवेशः किंतु जीवेन सहैवान्यथानेन जीवेनानुप्रविश्य नामरूपे व्याकरवाणी" ति श्रुतिविरोधप्रसंगात्तस्माज्जीवब्रह्मणोरंशांशिभाव एव ॥ औपाधिकभेदाभ्युपगमे तु तत्त्वमसीत्यत्र तत्त्वमिति पदे भागत्यागलक्षणा अंशत्वबोधकश्रुतीनामर्थवादत्वकल्पनं

उपासनाविषयाणां रूपाणामब्रह्मत्वकल्पनं कार्याणां मिथ्यात्वकल्पनं चेति दोषव्यूहः स्यात् गुणस्य गुण्यपेक्षया भिन्नत्वं तु पूर्वमेवोक्तम् ॥ चैतन्यस्य गुणत्वे प्रकाशाश्रयवत्सूत्रविरोधं वदन्सूत्रानभिज्ञत्वादुपेक्ष्य ॥ तद्गुणसारत्वादिति सूत्रं यत्त्वया व्याख्यातं तत्र दोषाः पूर्वमुक्ताः ॥ अधुनाप्युच्यते तत्र तत्पदेन यदुपाधि परामृश्यते स किमन्यथानुपपत्तिबलादध्याहृत उत क्वचित्पूर्वमुक्त ॥ नाद्य अनुपपत्त्यभावस्यास्मदुक्तरीत्या सम्भवात् रीतिस्तु पूर्वखंड एवोक्ता ॥ न द्वितीय अदृष्टत्वात् न "चातरा विज्ञानमनसी" त्यत्रोक्तं विज्ञानं बुद्धितत्त्वात्मकं दृश्यत एवेति वाच्यम् ॥ विज्ञानपदस्यानेकार्थत्वे नात्र बुद्धेरेव ग्रहणे नियामकाभावात् ॥ सूत्रे विज्ञानमनसीत्यत्र विज्ञानपदेन करणव्युत्पत्त्येंद्रियाणामपि सग्रहात् ॥ बुद्धेस्तत्पदेनोपादानमिंद्रियाणां नेत्यत्र नियामकाभावादित्यलं दूषितदूषणेन ॥ तत्त्वमसीत्यत्र गौणत्वं तु हस्तादिषु देवदत्तप्रयोगवत्तेन न स्वोक्तिविरोधो नाप्युपक्रमविरोध गौरवं तु त्वन्मते भागत्यागलक्षणागीकारादेव ॥ प्रज्ञादीनामीश्वरगुणत्वे जीवसबंधस्तु उपादानोपादेयभावलक्षणघटितः सुघट इति ॥ एतेन तत्त्वमसीत्यादिकं प्रत्युक्तं प्रवेशनादीनामुपहासस्तु गीताद्यर्थाज्ञानमूलत्वादज्ञताप्रयुक्त एवेति औपाधिकत्वं तु जीवस्य न सभवतीत्यसकृदावेदितमेव ॥ किंच "तमुत्क्रामंत प्राणोनूत्क्रामती" त्यादिश्रुत्याप्युत्क्रमणशीलोणुरेवात्मा विभोरुत्क्रात्याद्यसभवात् ॥ बुद्धिबलं त्वेतद्ग्रन्थद्वारा दृष्टमेवातत्तद्धीनत्वादासुरत्वाच्च शस्तत्वादिकथनं युक्तमेवेति ॥ एतेन नह्युपाधेरित्यादिकं दत्तोत्तरं आभास" एवेति सूत्रं तु न प्रतिबिंबप्रतिपादनपरं मानाभावात् अन्यत् सर्वं तु पूर्वमेव दूषितमिति ॥ इति त्रयोविंशतिखडखडनाभासस्याभासत्वप्रदर्शनम् ॥ अथ बुद्धिहीनस्येत्यादेश्चतुर्विंशतितमखडखडनाभासस्याभासत्वं प्रदर्श्यते ॥ बुद्धिहीनस्येत्यादिना गालिप्रदानं त्वसुरत्वादुचितमेव पराजितत्वे तस्मिन्द्योतयति ॥ पराजिता एव गालिप्रदानं कुर्वन्तीति तेनैवोक्तमधस्तात् ॥ आस्तां तावच्छ्रुत्याद्यविरोधाय विवर्तवाद स्वीकार्य इति यदुक्तं तत्र विवर्तवादाश्रयणेपि कथं श्रुतिविरोधपरिहार सोपि वक्तव्यो बुद्धिमता युक्तिज्ञेन ननु "तदेजति तन्नजति अपाणिपादे" त्यादिश्रुतिष्वनेजनापाणिपादत्वादिकं स्वाभाविकं गृहीतृत्वादिकं तु मायारूपोपाधिकं मिथ्येति न श्रुतिविरोध इति चेन्नैव "निर्गुणं निष्कलं शांतं निरवद्यं निरंजन"मित्यादिना सर्वोपाधिविनिर्मुक्ते ब्रह्मण्युपाधेर्वक्तुमशक्यत्वात् यदि चाहमज्ञस्त्वदुक्तमर्थं न जानामीत्याद्यनुभवानुरोधेन स्वप्रकाशे निरुपाधिकेप्युपाधि स्वीक्रियते तदा विरुद्धधर्माश्रयत्वमकामेनापि स्वीकृतमेव ॥ तथा च श्रुतीनां वाच्यार्थे द्वेष एव पर्यवस्यति ॥ ब्रह्मणि विरुद्धधर्माश्रयत्वमनुभवबलात्स्वीकार्यं न श्रुतिबलादित्यपि युक्तिर्वक्तव्या । अस्मन्मते च श्रुतीनां वाच्य एवार्थः सगच्छते । ब्रह्मणोचित्यानतशक्तिमत्वात् ॥ यत्तु ( श्रोतव्य इत्यादिश्रुतिर्लक्षणया शाब्दबोधविषयत्वमाह यतो वाचो निवर्तंत इति तु शक्त्या वाचा निवृत्ति ) मिति प्रलपितं तत्तुच्छम् । लक्षणया शक्त्या वा प्रतिपाद्ये शाब्दबोधाविषयत्वासंभवेन यतो वाच इत्यस्याः श्रुतेरसगतिर्दुर्वारैव ॥ किंच श्रोतव्य इत्यत्र लक्षणावाचकपदाभावाद्यतो वाच इत्यत्र शक्तिवाचक

रदाभावात्तदर्थं लक्षणैव कल्पनीया ॥ एवं तदेजतीत्यादावपि सविशेषनिर्विशेषपरा-चकपदाभावात्तत्र तत्र लक्षणाप्रकल्पनात् सर्वाश्रुतीः स्वार्थाद्व्याप्रयन्नपि दृष्टः परं पर्य-नुयुंजन्न लज्जते ॥ इति चतुर्विंशखंडखंडनाभासस्याभासत्वप्रदर्शनम् ॥ अथ तत्र पूर्वपक्ष इत्यादेः पंचविंशतिखंडखंडनाभासस्याभासत्वं प्रदर्श्यते ॥ तत्र सविशेषस्य श्रौतत्वं स्वाप्नश्रौतत्वतुल्यमित्यसंगतं श्रुतीनां त्वन्मते सर्वासामेव स्वप्नश्रुतितुल्यतया सर्वस्यैव श्रौतस्य स्वाप्नश्रौततुल्यतया निर्विशेषस्यापि तथात्वे विनिगमनाविरहात् ॥ नञ्सा-मान्यनिषेधकृदिति न्यायश्च पूर्वमेव दूषितः यच्चाज्ञानस्य द्वे शक्ती स्त इत्यादिना स्वमतनिरूपणं तदपि न सम्यक् तथाहि शक्तिद्वैविध्ये किं प्रमाणं प्रत्यक्षं श्रुतिर्वा-ऽन्यथानुपपत्तिर्वा ॥ नाद्यः ॥ प्रत्यक्षेण शक्तिद्वयस्याविषयीकरणात् ॥ नापि श्रुति-र्दृश्यते शक्तिद्वयप्रतिपादिका अज्ञाते घटादौ विक्षेपादर्शनेन शुक्त्यानिर्वचनीयरजतो-त्पत्तौ मानाभावेनान्यथानुपपत्तेर्वक्तुमशक्यत्वात् ॥ किंच कल्पनायां कल्पकं विना संभवेन निर्विकल्पकस्य कल्पकत्वे निर्विकल्पकत्वहानिः सविकल्पकस्य कल्पकत्वेऽनव-स्थादिप्रसंग इत्युक्तप्रायम् ॥ किंच रजतादीनामविद्याकल्पितत्वस्वीकारेऽविद्याया ब्रह्मनिष्ठत्वस्य त्वया स्वीकृततया यन्निष्ठेत्यत्र तत्पदेन ब्रह्मणः स्वीकारे नेतरस्येत्यस-संगतमितरेऽविद्यासंबंधाभावादेव रजतदर्शनाभावसिद्धिः ॥ यदि च यच्छब्देन जीव-स्योपादानं तदाप्यसंगतिः। अविद्याया जीवनिष्ठत्वाभावस्य त्वयैव निरूपणात् ॥ यत्प-देनाविद्योपादानेऽविद्याया एकत्वपक्षेऽसंगतिः ॥ रजततद्बाधज्ञानयोः सर्वसाधारण-त्वापत्तेस्तादवस्थ्यात् ॥ किंचाविद्याया एकत्वात्तदुपधेयस्य ब्रह्मणश्चैकत्वादेकस्य बाधज्ञाने कथं नान्यस्य बाधज्ञानं कथं वा एकस्य भ्रमेऽन्यस्यापि न भ्रम इति ॥ अविद्याया अनेकशक्तिकल्पनान्न दोष इत्यपि बालभाषितम् ॥ उभयमतसिद्धाविद्यानेकशक्तिम-द्ब्रह्मण एव सर्वव्यवस्थासिद्धौ तादृशकपोलकल्पनाया मानाभावात् ॥ जीवान्तरकमेवा-ज्ञातमित्यपि न किंचित् ॥ ब्रह्मान्तरकत्वादज्ञानस्येति ॥ किंचाज्ञानमेव यदि रजतो-त्पादकं तदा शुक्तिदर्शनात्पूर्वमप्यज्ञानस्य वर्तमानत्वादिदं रजतमिति प्रत्ययापत्तिः ॥ नचाधिष्ठानज्ञानाभावात्तदनुपपत्तिरिति वाच्यं न्युब्जीकृतशुक्तिज्ञानेपि तादृशभ्रमाभा-वात् ॥ नच सादृश्यज्ञानोद्बोधितरजतसंस्कारस्यापि हेतुत्वकल्पनान्न दोष इति वाच्यम् ॥ रंगादौ रंगत्वेन निश्चिते रजतसादृश्यज्ञानमपि यदा वर्तते शुक्त्यज्ञानं शुक्त्यवच्छिन्नचैतन्यस्यापि ज्ञानं तदा रजतभ्रमापत्तेर्दुर्वारत्वात् ॥ यथा कथंचिच्छुक्तौ सादृश्यभ्रमसंभवेपि ब्रह्मणि स्वप्रकाशे तादृशभ्रमस्य काप्यसंभवात् ॥ अनाद्यविद्या-कल्पने स्वांधपरंपरैव बीजम् ॥ किंच "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञान-बलक्रिया च" इत्यादिना ज्ञानशक्तित्वेन प्रसिद्धाया भगवच्छक्तेरज्ञानत्वकल्पनमपि श्रुतिविरुद्धम् ॥ तस्माच्छब्दे ब्रह्मणि कल्पकत्वमज्ञानं वा न संभवतीति ध्येयम् ॥ ज्ञानकालेऽविद्यांशस्थित्युपपादनं यदुपदर्शितं तदपि न संभवति ॥ "तरति शोक-मात्मवि"दित्यादिश्रुतिविरोधात् ॥ तत्र ज्ञानसमकालमेवाज्ञाननाशस्य त्वयोपपादि-तत्वेन पूर्वापरविरोधश्च ॥ यत्त्वन्योन्याश्रयस्तु बीजांकुरवत्परिहरणीय इत्युक्तं तदपि

न सम्यक् ॥ दृष्टाते प्रथम बीजोत्पत्तेरेव पुराणादौ प्रसिद्धत्वेनानवस्थाया अभावा दृष्टातासिद्धेरनवस्थाया तु परिहरत्वात् ॥ अविद्यारहितस्य निष्फलस्यैव दर्शनविष यत्व त्वदीयैरुक्त तच्च दर्शनोपहितस्य दृश्यत्वेपि विरुद्धत एव ॥ नहि दर्शनोपहिते ऽविद्यारहितत्व सभवति दर्शनस्याविद्यासबधविना सभवात् ॥ विशिष्टोपहितयोर्भेदस्य निर्वक्तुमशक्यत्वाच्च ॥ उपाधे कादाचित्कत्व विशेषणस्य विशेष्यसमानकालीनत्व-मिति भेद इति चेत्तर्हि रूपविशिष्टस्य घटस्य रूपोपलक्षितत्वापत्ति ॥ तत्रापि रूपस्य पाकादिना नाशाद्विशेष्यसमानकालिकत्वस्य वक्तुमशक्यत्वात् तेनाविद्यादशायामित्यादिक सर्वं निरस्तम् ॥ इति पचविंशखडखडनाभासस्याभासत्वप्रदर्शनम् ॥ अथ तत्रेत्यादि षड्विंशखडखडनाभासस्याभासत्व प्रदर्श्यते ॥ अवान्तरमिति नपुसकलिंगनिर्देशोऽसगत इति यदुक्त तच्च तरसर्वप्रथानालोचनात् ॥ पूर्व हि वास्तवरूपाभिप्रायमिति तेनोक्त तत्रावास्तवरूपज्ञाने तद्व्यावृत्त्या वास्तवरूप सम्यक् ज्ञातु शक्यमतोऽवास्तव रूप किमिति प्रश्न ॥ तत्रावास्तवस्य रूपविशेषणतया नपुसकत्व युक्तमेव । अत्र च धर्मविशेषणतया पुलिंगत्वमपि युक्तमिति न विरोध ॥ विकारो नामधेयमित्यादीनामर्थस्तु पूर्वखड एव प्रतिपादित ॥ अतस्तेन न मिथ्यात्व प्रतिपादयितु शक्यते ॥ एकविज्ञानेन सर्वविज्ञानप्रतिज्ञापि कार्यसत्यत्व एवोपपद्यते न मिथ्यात्वे ॥ नहि सत्यज्ञाने मिथ्याज्ञान सभवति ॥ मृदादिदृष्टातोपि कार्यसत्यत्व एवानुकूलो न मिथ्यात्व इत्युक्तमेव ॥ यच्चा त्रैव तेन "क्षित्यादीनामिहार्थाना छाया न कतमापि हि ॥ न सघातो विकारोऽपि न पृथक् नान्वितो मृषे"त्यादि भागवत स्वानुकूलत्वेन कार्यमिथ्यात्वे प्रमाणत्वेनोप दर्शितम् ॥ तदपि तद्भागवततार्थाज्ञानात् ॥ तत्र हि विकारोपि न पृथक् नान्वित न च मृषेत्यर्थ नञ् उभयत्र सबधात् ॥ तस्माद् भागवतोक्तयुक्त्यैव कार्याणा सत्यत्व श्रौतेऽर्थे तर्कस्यानवकाशात् घटादिषु कुलालजनितत्वेनोपाधिनियतत्व यदुक्त तत्र वर्णस्थौ ल्यादिषूपनेत्रादिर्ययोपाधि प्रदर्शितस्तथात्रापि नियतोपाधेरप्रदर्शनान्न्यूनत्वम् ॥ किंच वर्णस्योपाधि विनापि दृश्यमानत्वात्तत्र स्थौल्यमुपाधिजन्यमेव भवतु प्रकृते घटस्याप्यु पाधित पूर्वमसत्वात् कथ तत्रोपाधिनापि दडादिजनितत्वमिति प्रत्यक्षविरोधो दुर्वार एव ॥ जाग्रतो मरुमरीचिकादौ प्रवृत्त्यभावेपीत्यप्यसगत त्वन्मते जाग्रत एव मरुमरी-चिकादौ प्रवृत्तेरुक्तत्वात् ॥ जानत इति तु वक्तव्य पूर्वोक्तप्रमाणस्य घटादीनामवास्तवत्व-प्रतिपादकत्वासभवात् अविद्यादशाया प्रतीयमानत्वमेवानात्मत्व तच्चेदमहोप्यस्तीति तस्याप्यनात्मत्वापत्ति ॥ जगद्भ्रमविषयब्रह्मण्यप्यवास्तवत्वापत्तिश्च स्यात् ॥ दोषप्रयुक्ते सति दोषदशाया प्रतीतिविषयत्वरूपस्यास्मदुक्तिफलितलक्षणस्याविद्याप्रयुक्तत्वे सत्य विद्यादशाया प्रतीयमानत्वरूप लक्षण कल्पयित्वा दोषोद्भावन तु छलादेव ॥ दोषस्तु कुत्रचिद्दूरत्वादिरूप कुत्रचित्तिमिरादिरूपोऽननुगत ॥ एव च यत्र दर्पणखडरचितोप नेत्रादिना सूक्ष्मेषु वर्णेषु स्थूलत्वबुद्धिस्तत्र तदेव दोषरूप तत्प्रयुक्तत्व च यथा स्थौल्य प्रतीतौ तथा वर्णप्रतीतावपि तस्यापि भ्रमत्व दुरपह्नवमेव ॥ यत्तु ( दूरत्वादिदोषा पहारेण चक्षुषैव तत्र वर्णज्ञान ) मित्युक्त तत्तुच्छम् ॥ बहुतरमूर्तसयोगविशिष्टज्ञान

रूपस्य दूरत्वहेतोरत्र विद्यमानत्वेन तस्यापहारासम्भवात् ॥ नचोपनेत्रसमवधानस्य दूरत्वोत्पत्तिप्रतिबन्धकत्वादुत्पन्नदूरत्वादिनाशकत्वाद्वा तत्र दूरत्वापहार इति वाच्यम् ॥ तथा सति तत्समवधाने तस्मादिदं व्यवहितमिति प्रतीत्यनुपपत्ते व्यवहितत्वस्य दूरत्वरूपत्वात् ॥ किंचोपनेत्रादिना दूरत्वसामान्यस्यापहारो विशेषस्य वा नाद्य । एकेन पुरुषेणोपनेत्रादिधारणेऽन्यस्यापि तत्र स्थौल्यादिप्रतीत्यापत्तिर्दूरत्वादिप्रतीत्यनुपपत्तिश्च ॥ नापि द्वितीय तादृशविशेषस्य वक्तुमशक्यत्वादुपनेत्रादिसन्निधानेपि दूरत्वप्रतीतेश्चेति ॥ किंचोपनेत्रसन्निधानसत्वे स्थौल्यादिप्रतीतिसत्व तदभावे च तदसत्वमित्यन्वयव्यतिरेकसत्त्वेपि यद्युपनेत्राद्युपाधे कारणसामग्रीप्रवेशो न स्वीक्रियते तदा आलोकसंयोगेनापि तमसोपहारो घटादिज्ञान तु चक्षुषैवेत्यस्यापि वक्तु शक्यत्वेनालोकादीनामपि ज्ञानसामग्रीप्रवेशो न स्यात् ॥ तत्रापि गौरवस्य वक्तु शक्यत्वात्तस्मादन्वयव्यतिरेकावेव कारणत्वव्यवस्थापकौ तौ चोपनेत्रादिष्वपि तुल्यौ तत्सम्बन्धस्यापि वर्णप्रमाणांशे गुणत्वसम्भवेन तत्र न तस्य गुणत्वमित्यपह्नवोऽयुक्त एव ॥ एव च तद्दृष्टान्तेन ब्रह्मांशेपि गुणत्वमविद्याया कथ न स्यात् ॥ नह्यविद्यया प्रतीयमानस्य मिथ्यात्वमिति नियमोऽखण्डाकारवृत्तेरप्यविद्यापरिणामत्वेनाविद्याकार्यत्वात्तद्विषयस्यापि मिथ्यात्वापत्ते ॥ नचेष्टापत्ति शून्यवादापत्ते ॥ प्रमाणाना सविशेष एवोपक्षया निर्गुणस्य निष्प्रमाणत्वापत्ति ॥ यत्त्वविद्याप्युपकाराय विषवज्जायते नृणामिति टीकोक्तवाक्यमनूद्य तदसङ्गतमित्युक्त्वा ( तत्राविद्याशब्देन कर्मणो ग्रहणादत एवानुष्ठितेत्युक्त अन्यथा तन्न सङ्गच्छेत अज्ञानस्यानुष्ठानायोगा ) दित्यादि प्रलपितम् ॥ तत्र कर्मण एवानुष्ठान न तद्भिन्नस्येति यदि तव मनीषित तदा विषवदिति दृष्टान्तासङ्गति ॥ नहि विषस्याप्यनुष्ठान सम्भवति ॥ यदि च तस्य भक्षणादिविशिष्टस्यानुष्ठान सम्भवतीति मन्यसे तदा विद्याया अपि व्यापारविशिष्टाया कथ नानुष्ठानम् ॥ अविद्याशब्दस्य क्वचित्कर्मणि प्रयोगस्तु प्रकृतिवाचकशब्दस्य विकृतौ प्रयोगवदवगन्तव्य ॥ यथा 'गोभि श्रीणीत मत्सर' 'पशुना यजेते' त्यत्र दुग्धहृदयादिरूपविकृतिषु प्रयोक्तव्यासु तत्प्रकृतय प्रयुक्तास्तद्वत् ॥ अविद्याप्युपकारायेत्यत्र तु न कर्मणो ग्रहण मानाभावात् । न च प्रकरणमेव प्रमाणमिति वाच्यम् ॥ एकप्रकरणस्थस्यापि पदस्योभयबोधकत्वे सति तात्पर्यं सम्भवति ॥ यथा "तपसा ब्रह्म विजिज्ञासस्व तपो ब्रह्मेती" त्यत्रैकस्यापि ब्रह्मशब्दस्य ब्रह्मतपसोर्वाचकत्वम् ॥ तस्माद्विनिगमनाविरहेणैकशेषस्य कर्तुमशक्यत्वात्कर्मण एव ग्रहणमित्यसङ्गतमेव ॥ यत्तु "न तस्य कार्यं करण न विद्यत" इति श्रुतिव्याख्यानमनूद्य ( तत्सम्बन्धि उद्दिश्यजन्यान्योन्याभावो बोध्यत इति फलति एवमोत्तरत्रापि तदेवोद्दिश्य करणान्योन्याभावो बोध्येत तथा हि सति किंच तस्येत्यादिस्वग्रन्थो विरुध्येत ) त्यादिप्रलपित तन्मन्दम् ॥ षष्ठ्या सम्बन्धश्च बहुविधस्तात्पर्यवशाद्भासते ॥ अत एव चैत्रस्य पुत्र पुत्रश्चेत्यादौ पुरुषे स्वत्व पुत्रपदार्थैकदेशे जन्यत्वं शाब्दासते ॥ त्वदुक्तरीत्या तु पुत्रेपि स्वत्वमेव बोध्येत तस्यैव निरूपितत्व च तात्पर्यवशाद्भासते ॥ त्वदुक्तरीत्या तु पुत्रेपि स्वत्वमेव बोध्येत तस्यैव निरूपितत्व च वैकपदोपस्थापितयोरुपादेयत्वभिन्नत्वयोर्जन्यपदस्यावृत्त्या गौरव वा प्रसज्येत एव

भिन्ने करणभिन्ने चान्वयसम्भवात् कोपि दोष पद्गमादधाति ॥ यद्वा शक्त्या उपादेयत्व लक्षणया च भेद षष्ठ्या बोध्यते ॥ न च युगपद्वृत्तिद्वयविरोध इति वाच्यम् ॥ गगाया घोषमत्स्यौ स्त इत्यत्र गगाशब्दात्प्रवाहतीररूपयोरर्थयो शक्तिलाक्षणाभ्या बोधेन तादृशविरोधे मानाभावात् ॥ सति तात्पर्ये उभयबोधस्य सम्भवात् अन्यथा तत्रापि वैरूप्य वाक्यभेदादिक प्रसज्येत ॥ वस्तुतस्तु न तस्य कार्यमित्यस्य तत्सबधिकार्यत्वाभावादित्यर्थ ॥ अत एव नञविरहितस्थले तत्सबधिकार्यत्ववदिति बोध ॥ प्रतियोग्यभावान्वयौ तुल्ययोगक्षेमावित्यस्य तु नञ्विरहितस्थले यादृशसबधेन यादृशधर्मिणि यद्वत्व प्रतीयते नञ्समभिहारस्थले तेन सबधेन तदभाव प्रतीयत इत्यर्थकत्वेन नञ्विरहितस्थले तत्सबधिनि जन्यत्वस्य प्रतीतेस्तत्समभिहारस्थले तदभावबोधो न न्यायविरुद्ध ॥ धर्मिभेदस्य धर्मात्यताभावरूपत्वाच्च जन्यान्योन्याभाव बोधोपि सगत ॥ ईदृशयुक्तिमनादृत्य त्वत्प्रलपितरीत्यनुरोधेन तादृशनियमस्वीकारे नञो भेदबोधकत्व कुत्रापि न स्यात् । नीलो घट इत्यत्रापि सिद्धाते नीलभेदस्य स्वप्रतियोगिवृत्तित्वस्वसामानाधिकरण्योभयसबधेन व्यक्तिविशिष्टान्यत्वरूपस्ववृत्त्यसाधारण धर्मरूपस्य नञविरहितस्थले घटे बोधान्नञ्समभिव्याहारस्थले तदत्यताभावस्यैव बोध स्यात् नतु भेदस्य ॥ किंच न तस्य कार्यं विद्यत इत्यस्य तादात्म्यबोधनायोग्यत्वात्कथ नञान्योन्याभावबोधनमिति वदतस्त्व तत्र कीदृशो बोधोभिमत तत्सबधिकार्यसत्तावदित्याकारक इति चेत्तर्हि नञ्समभिहारस्थले तत्सबधिकार्यं सत्ताभाववदित्याकारक एव बोध स्यात्स च न सभवति कार्ये सति सत्ताभावस्य वक्तुमशक्यत्वात् ॥ न च कार्यस्य मिथ्यात्वादसत्त्वमेवेति वाच्यम् ॥ तस्यासत्वे सदसतो सबधासभवेन षष्ठ्यर्थानन्वयप्रसगात् ॥ नचाध्यासिक एव सबध इति वाच्यम् । तदसभवस्य पूर्वं विस्तरेणोपपादितत्वात् ॥ एतेन ( तस्मात्तस्य कार्यकारणयोरत्यताभाव एव श्रुत्या बोध्यत ) इत्यादिकमपास्तम् ॥ कार्यकारणयोस्तत्सबधित्वे तदत्यताभावस्य अत्यताभाव स्वीकारे च तत्सबधस्यासभवात् ॥ यत्तु न तत्समश्चेत्यादावेकश्चकारोनुक्तसमुच्चयार्थस्तेन न्यूनोपि न दृश्यत इत्यर्थ । द्वितीय उक्तसमुच्चयार्थ इत्याद्युक्त तन्निर्मूल प्रथमस्योक्तसमुच्चयार्थत्व द्वितीयस्यैवानुक्तसमुच्चयार्थत्वमित्यत्र विनिगमकस्याभावात् ॥ किंच यथा प्रथमस्यानुक्तसमुच्चयार्थत्व च कपोलकल्पनयोच्यते तथा द्वितीयस्यापि किंचिदनुक्त कल्पयित्वानुक्तसमुच्चयार्थत्वमेव किं न स्यात् ॥ यदि च जीवास्तदभिन्ना न तद्दासास्तदा तत्समा एवेत्येव वदति तदा न तत्सम इति पूर्वोक्तविरोध ॥ किंच यदि जीवास्तदभिन्नास्तत्स्वरूपा एव स्युस्तदा किमवधिकमीश्वरस्त्व नियतृत्व वा तस्य स्यात् ॥ तस्माज्जीवास्तद्दासा एव ॥ तत्त्वमसीत्यादेरर्थस्तु दर्शित एवातो न कोपि दोष ॥ "सर्वं खल्विद ब्रह्म" त्यस्यापि त्वदुक्तरीत्यार्थस्वीकारे इदपदवाच्यस्य दृश्यस्य मिथ्यात्वाद्ब्रह्मत्वानुपपत्ति ब्रह्मत्वे मिथ्यात्वानुपपत्ति ॥ नच तत्त्वमसीत्याद्युक्तरीत्या भागत्यागलक्षणेति वाच्यम् ॥ इदशब्दस्य चक्षुरादिजन्यप्रत्यक्षविषयवाचकतया ब्रह्मणश्च "यतो वाचो निवर्तन्ते यच्चक्षुषा न पश्यति येन चक्षूषि पश्यती" त्यादि

श्रुत्या सर्वेन्द्रियागोचरतया विशेष्यविषयापीदंशब्दवाच्यत्वासंभवाद्भागत्यागलक्षणाया अनवकाशात् । अस्मन्मते च मृदादिकार्यं सर्वं घटपटादिकं मृदेवेत्यादिवत्सर्वं ब्रह्मकार्यं ब्रह्मैवेत्युपपद्यते ॥ "परास्य शक्तिर्विविधैव" इत्यादिश्रुतेरपि त्वदुक्तार्थकत्वं न संभवति ॥ मायायास्त्वया त्रैकालिकनिषेधप्रतियोगित्वस्वीकारेण घटपटाद्यपेक्षयोत्कृष्टत्वासंभवात् तेषामपि तथात्वात् ब्रह्मापेक्षयोत्कृष्टत्वं च न संभावितम्, अत एव सर्वापेक्षयोत्कृष्टत्वशङ्काप्यपास्ता ॥ विविधेत्यस्यापि सत्त्वादिगुणत्वादावरणशक्त्यादिमत्त्वाद्वा विविधा अनेकप्रकारा इत्यर्थस्वीकारे एकस्यापि पटादे रूपरसाद्यनेकगुणवत्त्वेनाच्छादनबन्धनाद्यनेकशक्तिमत्त्वेन च विविधत्वापत्तिः ॥ किंच ब्रह्मणोऽचिंत्यानन्तानन्तशक्तिमत्त्वानुपपत्तिश्च तस्मात्परा इत्यस्याचिंत्येत्यर्थः ॥ विविधेत्यस्यानन्तानेकरूपेत्यर्थः ॥ स्वाभाविकीत्यस्यापि स्वस्वरूपेत्येवार्थः । नत्वजन्या इत्यर्थकत्वं तथा सति जलस्य स्वाभाविकं शैत्यं तेजसः स्वाभाविकमुष्णत्वमित्यादावपि शैत्यमजन्यमुष्णत्वं चाजन्यमिति बोधापत्तिः स्वरूपं च स्वभावश्चेति कोशविरोधश्च स्यात् ॥ ज्ञानबलक्रिया चेत्यत्रापि स्वाभाविकीत्यस्यैव संबन्धोऽतो न वैयधिकरण्यम् ॥ गौरवं तु त्वन्मत एव । स्वाभाविकीत्यनेन नागन्तुका ॥ करपादादेर्मायिकत्वं तु पूर्वभागे विस्तरेण खण्डितम् ॥ यत्तु ईक्षत्यधिकरणविरोधादित्युक्त्वा तथा ह्रीत्याद्युक्तिरसंगता ईक्षत्यधिकरणे शरीरित्वाद्यसाधनादित्युक्तं तदपि तथा ह्रीत्यादेर्भावानवबोधनात् ॥ नहि तथा ह्रीत्यादिग्रन्थेन ब्रह्मणः शरीरित्वं साधितं किंत्वशरीरित्वं जगत्कर्तृत्वं च तदेवेक्षत्यधिकरणे निरूपितमतः सामान्यतः कर्तृत्वनिषेधे तदधिकरणविरोध एव ॥ नन्वीक्षत्यधिकरणे प्रधानस्य कर्तृत्वं निषिध्यत इति चेन्न अप्रकृतत्वात् ब्रह्मकर्तृत्वमेव प्रकृतम् ॥ किंच द्वितीयाध्याये प्रधानकर्तृत्वनिषेधो व्यर्थः स्यादधुनैव तस्य निरस्तत्वात् ॥ मिथ्यातो निषेधोऽपि त्वन्मत एव विरुद्धः सर्वदैव तस्याभावात् । अन्यथा तस्य मिथ्यात्वानुपपत्तिः ॥ तृतीयश्लोकव्याख्याया तु यच्चयोक्तं तत्तत्रैव दूषितम् ॥ तस्मात्तत्तद्बाधिकार्याद्युर्जन्यत्वनिषेधात्तेषां नित्यत्वात्सविशेषमेव ब्रह्मेति सिद्धम् ॥ इति षड्विंशखण्डखण्डनाभासस्याभासत्वप्रदर्शनम् ॥ अथ तत्र चित्तशुद्धेरित्यादेः सप्तविंशखण्डखण्डनाभासस्याभासत्वं प्रदर्श्यते ॥ तपस्यादीनां निंदितत्वे "तपसा ब्रह्म विजिज्ञासस्व तपो ब्रह्म" इत्यादिश्रुतिविरोधः ॥ भक्त्या मामभिजानातीति भगवद्वाक्यविरोधश्च तत्र हि भक्तित्वं सेरेव ब्रह्मप्राप्तिहेतुत्वेन प्रतिपादनात् ॥ नच "न कर्मणा न प्रजया न धनेन" इत्यत्र तन्निषेधात्सद्गतिरिति वाच्यम् ॥ तत्र कर्मपदस्य काम्यकर्मपरत्वात् अन्यथा "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा नाशकेन" इत्यादिश्रुतिविरोधापत्तिः ॥ मार्कण्डेयपुराणेऽपि भगवतीप्रसादस्य तपसश्च मोक्षहेतुत्वमुक्तम् ॥ सैषा प्रसन्ना वरदा नृणां भवति मुक्तये ॥ स च वैश्यस्तपस्तेपे देवीसूक्तं परं जपन्नित्यादिना ॥ देवीप्रसादश्चोपलक्षणं एतेन मार्कण्डेयपुराणवाक्येत्यादिकमपास्तम् ॥ नेदं यदिदमुपासत इत्यस्यार्थस्तु प्रागेवाभिहितः तपस्यादीनां तु स्वजन्यचित्तशुद्धिद्वारा प्राकट्यहेतुत्वं भवेत्तु साक्षादेव *भगवत्प्राकट्यहेतुत्वमतस्तस्या आधिक्यं अयमेवार्थो*

नाहं वेदैरित्यादिना भगवता उक्तत्वमञ्चारत्रोपक्रमविरोधं वदन्नुपेक्षणीय एव ॥ उपक्रमे तु स्वन्मतदूषणार्थं तत्प्रसादेनेत्यादिदूषणमुक्तमित्यवधेयम् ॥ यत्तु (प्रलयकाले सत्यलोकवासिना नारायणशयनादिभ्रम) इत्यादि प्रलपित तदपि शास्त्रविरुद्धम् ॥ ब्रह्मणोपि नाशे नारायणशयनस्य पुराणादिषु प्रतिपादनात् तदानीं सत्यलोकस्य वक्तुमशक्यत्वात् ॥ तदानीं कस्य भ्रम इति पूर्वपक्षस्यानुद्धाराच्च ॥ न च तदानीं नारायणस्य शक्तेरावरकत्वाभावेपि विक्षेपकताया सत्वेन तत्कल्पनया शयनादिसभव इति वाच्यम् ॥ तर्हि तादृशशक्तिर्नित्यानित्या वेति वक्तव्यम् ॥ नित्यत्वे स्वद्वैतहानिरपसिद्धातश्च ॥ अनित्यत्वे तु किं तस्यानाशक नहि जीववदीश्वरनिष्ठाया अपि मायाया ज्ञान नाशकमिति शक्यम् ॥ ईश्वरस्य सर्वदैव स्वरूपज्ञानसत्वेन मायाया स्थितिरेव न स्यात् ईश्वरेच्छयैव तन्निवृत्तिरित्युच्यते चेत्तदा तयैव शयनादिक्रीडाया अपि सभवेन व्यर्थमेतादृशी कल्पना ॥ किंचैवमीश्वरस्य भ्रांतत्वमपि विभ्रमाधिष्ठानत्वात् प्रलयकल्पनाभावे भूतार्थवेदिनामित्यसगतम् ॥ एतेन तात्कालिकेत्यादिक सर्वमपास्तम् ॥ इति सप्तविंशखडखडनाभासस्याभासत्वप्रदर्शनम् ॥ अथ तत्र प्राथमिकेत्यादेरष्टाविंशखडखडनाभासस्याभासत्व प्रदर्श्यते । तत्र सर्वस्यैव कल्पितत्व वदता बौद्धकल्पेन कल्पितविज्ञानरूपैव सृष्टिर्वक्तु न शक्या ॥ सर्वश्रुतिस्मृतिलोपप्रसगात् ॥ क्षणिकवादमताश्रयणप्रसगाच्च ॥ किंच कल्पितसृष्टिस्वीकारे ससारस्यानादित्वसाधनाधंमाग्रहोपि निरर्थक कल्पितेऽनादित्वस्यापि कल्पितस्यैव सभवेऽवास्तवस्य तस्याकिंचित्करत्वात् ॥ किंच ब्रह्मणो निराकारत्वस्वीकारे तवापि कालयवनीयमतप्रवेशस्तैरपि निराकारस्यैवेश्वरस्य स्वीकारात् ॥ किंच "ब्रह्म वा इदमग्र आसीत् आत्मा वा इदमग्र आसी"दित्यादौ ब्रह्मपदेन सगुण ब्रह्म विवक्षित निर्गुण वा नाद्य ॥ तथा सति उपक्रमोपसहारादिषड्विधलिंगस्य सगुणविषयकत्वान्निर्गुणे मानाभावेन तस्यासिद्धि स्यात् ॥ नापि द्वितीय निर्गुणस्य कल्पकत्वानुपपत्त्या कल्पकत्वे निर्गुणत्वानुपपत्त्या सृष्ट्यनुपपत्ति ॥ "यो ब्रह्माण विदधाति पूर्वं यो वेदांश्च प्रहिणोति तस्म"इत्यादिश्रुति विरोधश्च ॥ न चावतारकर्मांतरवत्तदिति वाच्यम् ॥ अवतारस्य स्वन्मते कल्पितत्वेन ब्रह्मणोपि कल्पितत्वापत्ते ॥ यत्तु (सगुणब्रह्मविषयकवाक्यविचारोपि कर्मपरवाक्य ज्ञानसाधनत्ववाक्यविचारवदुपयोगमात्रेणोपपन्न) इति तदप्यविचारितरमणीयम् ॥ कर्मणो यथा ज्ञानोपयोगित्वबोधक "तमेत वेदानुवचनेन ब्राह्मणा विविदिषंति यज्ञेन दानेन तपसा नाशकने"त्यादिक वाक्य दृश्यते न तथा सगुणब्रह्मोपासनस्य ॥ तस्य साक्षादेव मोक्षसाधनत्वात् ॥ किंच स्वन्मत उपास्यस्याब्रह्मत्वात् "सर्वेभ्य पाप्मभ्य उदित"इत्यादि ब्रह्मधर्मास्तस्मिन्ननुपपन्ना स्यु ॥ अत एव–उपासनाश्रितो धर्म कार्ये ब्रह्मणि वर्तते ॥ प्रागुत्पत्तेरज सर्वं तेनासौ कृपणो मत ॥ इत्यादिना तस्य कृपणत्व स्वदीयै प्रतिपादितम् ॥ किंच "आकाशस्तल्लिंगा"दित्यादि सूत्रेषु आकाशादिपदेन परमेव ब्रह्मोच्यत इत्यादिना शारीरक प्रतिपादित तदपि विरुध्येत ॥ सगुणस्य परत्वाभावाद्युक्त चैतत् "अथातो ब्रह्मजिज्ञासे"त्यनेन परब्रह्मणो जिज्ञासामुक्त्वाऽपरब्रह्मनिरू-

पणेऽर्थांतर स्यात् ॥ "तस्मादाकाशमत्लिंगात् अंतस्तद्धर्मोपदेशा"दित्यादिसूत्रे परमेव ब्रह्म निरूपितम् ॥ नच तत्तत्सूत्रे प्रतिपादितस्य साकारत्वात् साकारस्य च परत्वे मानाभाव इति वाच्यम् ॥ परस्य ब्रह्मणो लौकिकप्रमाणमेयत्वाभावे दृढैकसमधिगम्यस्वाद्यथा वेदे प्रतिपाद्यते तथैव तद्विज्ञेयमित्यसकृदावेदितत्वात् उपासनाफल तु तृतीये ध्याये श्रीमदाचार्यैर्निरूपितमणुभाष्ये तदधीत्य निश्चिनु ॥ (सूत्रकाराशयस्य तद्धर्मोप लक्षितस्य ब्रह्मत्वेप्युपपत्ते) रित्यपि यदुक्त तदप्यसगतम् ॥ ब्रह्मणस्त्वन्मते तद्धर्मोप लक्षितत्वासभवात् कदाचिद्विद्यमानस्यैवोपलक्षणत्वात्त्रिषु कालेष्वविद्यमानस्य खपुष्पाय माणस्योपलक्षणत्वासभवात् ॥ यत्तु जीवस्वरूपस्य नाविद्याकल्पितत्वमित्यवोचस्तद प्यपह्नवमात्र–कूटस्थे कल्पिता बुद्धिस्तत्र चित्प्रतिबिंबक ॥ प्राणाना धारणाज्जीव ससारेण स युज्यत इति वचनविरुद्ध च ॥ किंच प्रतिबिंबवादाभासवादयोर्विलोपा पत्तिश्च स्यात् न चाविकृत ब्रह्मैव जीव इत्यपि वक्तु शक्य सर्वश्रुतिप्लवापत्तेरुक्तत्वात् ॥ यदि सविशेषनिरूपिकाया श्रुतेस्तद्रूपेण सत्यत्वे तात्पर्यं नास्ति तदा निर्विशेषनिरूपिकायास्तदस्तीत्यत्रापि प्रमाण वक्तव्यमन्यथा तत्रापि पर्यनुयोगापत्ते ॥ एतेन (सविशेषनिरूपिकाया) इत्यादिक प्रत्युक्त किंचेश्वरस्याविद्याप्रतिबिंबत्वस्वीकारे जीववदुपाध्यधीनत्वापत्ति नहि हृदप्रतिबिंबितस्योपाध्यनधीनत्व वीचिप्रतिबिंबितस्य तदधीनत्वमिति वक्तु शक्यते प्रतिबिंबमात्रस्योपाधिपक्षपातित्वात् तथा च तस्येश्वरत्वानुपपत्ति ॥ मायाख्याया कामधेनोर्वत्सौ जीवेश्वरावुभौ ॥ यथेच्छ पिबतो द्वैत तत्त्व त्वद्वैतमेव हीत्यादिनेश्वरस्यापि मायाधीनत्वप्रतिपादनात् (असतापि कारणेन कार्योत्पत्ति) रिति यदुक्त तदपि "कथमसत सज्जायत" इति श्रुतिविरुद्धम् ॥ किंच असत कारणत्वे कारण विनापि कार्योत्पत्त्यापत्तिरसत्वाविशेषात् ॥ इत्यष्टाविंशखड खडनाभासस्याभासत्वप्रदर्शनम् ॥ अथ तत्र विशेषेत्यादेरेकोनत्रिंशखडखडनाभासस्याभासत्व प्रदर्श्यते ॥ तत्र विशेषस्य कल्पितत्वे दोषसमूहस्योक्तत्वात्कल्पकत्वस्यात्यसभवान्निर्विशेषसविशेषयोरभेदस्य त्वदुक्तरीत्या सभवेन व्यासस्य प्रतिज्ञाहानिरशक्यपरिहारैव ॥ किंच सविशेषस्य निर्विशेषाद्भिन्नत्वे तत्र वेदस्य तात्पर्यं नेति त्वदुक्तिरसगता "सर्वकाम सर्वगन्ध सर्वरस" 'सर्वत पाणिपाद तत्सर्वतोक्षिशिरोमुख" मित्यादिश्रुतिस्मृतिभ्यां ब्रह्मण सविशेषमेव स्वरूप प्रतिपाद्यते न च तत्र तात्पर्याभाव इति वाच्यम् ॥ उपक्रमादिषड्विधस्य तात्पर्यनिर्णायकस्य तत्र सविशेषविषयकत्वात् विनैव प्रमाणमन्यविषयकत्वे निर्विशेषप्रतिपादकानामप्यन्यविषयकत्वापात ॥ नच 'सत्य ज्ञानमनत ब्रह्म' त्यादिश्रुत्युक्तस्य देशकालवस्तुपरिच्छेदशून्यत्वस्य विरोधान्न परिच्छिन्नत्व ब्रह्मण सभवतीति वाच्यम् ॥ सकलविरुद्धधर्माश्रयत्वस्यैव धर्मिग्राहकमानसिद्धत्वेन विरोधस्याकिंचित्करत्वात् ॥ अत एवार्जुनाय परिच्छिन्नत्वं विश्वरूपत्व च दर्शित भगवता ॥ न च विश्वरूपत्व मायिकमिति वाच्यम् ॥ दिव्य ददामि ते चक्षुरित्यादिवचनविरोधान्नहि नटेन मायिकस्वरूपदर्शनार्थं चक्षुरादि दीयते शुक्तिरजतादिदर्शनार्थं वा द्वितीयचक्षुरपेक्षा तस्मादेकमेवोभयविध ब्रह्मेति सिद्धम् ॥

किंच तद्रूपस्य मायिकत्वे—त्रय्या चोपनिषद्भिश्च सांख्ययोगैश्च सात्वतैरित्यादिवचनविरोध नहि वेदाना तादृशरूपे तात्पर्यं त्वन्मते सभवति ॥ नच विशेष्यामि प्रायेण तदुक्तमिति वाच्यम् ॥ विशेष्यस्य सर्वसाधारणत्वात् नहि जीवेषु चैत्रादिषु विशेष्यभागस्य त्वन्मतेनोपनिषत्प्रतिपाद्यत्वमस्तीति ॥ एव च सर्वत्रैव तत्कथनस्य सभावितत्वया तत्रैव विशेषस्य वक्तुमशक्यत्वेन शुकदेवादीना तथाकथनमनर्थकमापद्येत । एवमेव न चातत्वं बहिर्यस्येत्यस्यापि विरोधो दुष्परिहार ॥ यदि च सामर्थ्यविशेषेणैव रज्जुन्यूनतादिरित्युच्यते तदा सामर्थ्यविशेषेणैव विरुद्धधर्माश्रयत्वादिसिद्धौ किमेतेन मायादिकल्पनेन ॥ यत्तु आत्मयोगो मायेत्युक्त तदपि न किंचित् अप्रसिद्धे न च योगोऽपूर्वार्थसप्राप्तौ सगतिध्यानयुक्तिष्विति मेदिनीकोशाद्योग शब्दस्य युक्तौ रूढिदर्शनान्मायाया युक्तिरूपत्वादात्मयोगशब्दो मायावाचक इति वाच्यम् ॥ मायाया युक्तिरूपत्वे मानाभावात् युक्तिर्हि साधकबाधकप्रमाणोपन्यासरूपा नहि माया पद्प्रमाणान्तर्गता त्वयाभ्युपगम्यते ॥ किंच मायाया एव त्वदभिप्रेताया पूर्वमसभवस्य प्रतिपादितत्वेन धर्मोणा मायिकत्वस्य दूरपराहतत्वात् । एतेन सर्वेषां धर्माणामित्यादिक निरस्तम् ॥ किंच यदि ब्रह्मणि धर्म कोपि नास्ति तदा "सर्वधर्मोपपत्तेश्च" त्यादिसूत्रविरोधस्तत्र धर्माणामेवासभवेन तदुपपत्तेर्वक्तुमशक्यत्वात् सूत्रार्थस्त्वणुभाष्यादितोवसेय ॥ किंच भगवता स्वरूपकथनावसरे–सर्वेन्द्रियगुणाभास सर्वेन्द्रियविवर्जितम् ॥ असक्त सर्वभृच्चैव निर्गुण गुणभोक्तृ चेत्यादिनोभयविधमेव स्वरूप प्रतिपादित तत्रैकस्य मायिकत्वमन्यस्यामायिकत्वमिति व्यवस्थाया प्रमाणशून्यत्वेन निर्मूलत्वादुभयविधमेव तत्स्वरूपमिति युक्तमुत्पश्याम ॥ इत्येकोनत्रिंशखडखडनाभासस्याभासत्वप्रदर्शनम् ॥ अथ तत्र व्यापकस्य प्रादेशेत्यादेस्त्रिंशत्खडखडनाभासस्याभासत्व प्रदर्श्यते ॥ तत्र ब्रह्मणि विरुद्धधर्माश्रयत्व वेदप्रतिपाद्यत्वात् स्वीक्रियते वेदार्थवासनारहिताना तु तन्न बुद्धिपथमारोहति गालिप्रदान त्वासुरसहजधर्मत्वादुचितमेव सर्वलोकव्यवस्थोच्छेदस्तु स्वकपोलकल्पनया तत्स्वीकारे स्यात् ॥ यथा मायाया दुर्घटघटनापटीयस्त्वीकारे वेदप्रतिपाद्यविरुद्धधर्मस्वीकारे तु न कोपि दोष ॥ अत एव सूत्रकारेणापि 'वैश्वानर –साधारणशब्दविशेषा''दित्यादिना ब्रह्मणो विरुद्धधर्माश्रयत्व प्रदर्शितम् ॥ तदर्थस्तु–वैश्वानर परमात्मैव साधारणशब्दायो विशेष अथवा साधारणशब्दे यो विशेषस्तस्माद्विशेषश्चाभिविमानमित्यादिनोक्त प्रादेशपरिमाणत्वव्यापकत्वादिलक्षण स च ब्रह्मण्येव सभवति सकलवेदोक्तविरुद्धधर्माश्रयत्वात् नाग्नौ नापि जीवे ॥ यत्तु साधारणशब्दयोर्विशेष इत्युक्त तन्न सम्यक् ॥ क्लिष्टकल्पनापत्त विरोधस्य ब्रह्मण्यदूषणत्वात् व्यापकस्यैव मूर्द्धचिबुकान्तरा स्थिति "रामनन्ति चैनमस्मिन्" ति सूत्रे व्यास प्रतिपादिता सगच्छते मायया तथा भानस्तु तत्प्रतिपादकशब्दस्य तत्रादर्शनादुपेक्ष्य व्यापकत्व मायिक प्रादेशमात्रत्व यथार्थमित्यत्र विनिगमनाविरहश्च मायाया नित्यत्वानित्यत्वविकल्पे पूर्वोक्तदोषग्राम सर्वेषूपास्यधर्मेषु भानमात्रार्थमनुवाद इति च कल्प्य प्रसिद्धस्त्वपि तादृश वाक्यत्व च वेदप्रतिपाद्यत्वमित्यादि यत् प्रलपित तत्तुच्छम् ॥

योन्यथा स तमात्मा
वेदाप्रतिपाद्यधर्माणा त्वया ब्रह्मण्यनुपगमात् ब्रह्मणो निर्गुणत्वात् योन्यथा स तमात्मा
नमन्यथा प्रतिपद्यत इत्यादिवाक्योक्तो दोषश्च त्वन्मते स्यात् ॥ जीवस्य भगवदधीन-
स्याणुरूपस्य व्यापकत्वेन तदनधीनत्वेन सत्यस्य मिथ्यात्वेन चाभ्युपगमात् ॥ अस्मन्मते
च नोक्तदोषस्तथानभ्युपगमात् ॥ किंचात्मशब्देन ब्रह्मणो ग्रहणेपि त्वन्मत एव दोषो
न ह्यात्मा सविशेषो निर्विशेषो वेति लौकिकप्रमाणतो निश्चेतु शक्यम् ॥ किंतु वेदत एव
वेदे तु सविशेषनिर्विशेषोभयप्रतिपादकानि वाक्यानि दृश्यते तत्रैकतरस्यान्यथात्वक-
ल्पनेऽवैदिकत्वापत्त्या विरुद्धधर्माश्रयत्वेन ब्रह्म वेदतोवगत तन्निर्विशेषत्वेनैव य प्रति-
पद्यते स एव पापीयान्तरक प्रतिपद्यत इत्यर्थ ॥ ननु योन्यथासतमिति वाक्येनात्मनो-
ऽन्यथा प्रतिपत्तिर्निषिध्यते न त्वन्यथा भूतस्यात्मत्वेन प्रतिपत्ति । एव च साध्यविरुद्धो
हेतु अवस्तुन आत्मत्वेनोपासनस्योपक्रातत्वादिति चेन्नैवम् ॥ नहि त्वन्मतेऽवस्तुन आत्म-
नोपासन किंतु सविशेषस्यात्मनस्तस्य च नावस्तुत्व विशेष्यादेर्वस्तुत्वात् किंत्वन्यथा सतो (
निर्विशेषत्वेन प्रतिपत्तिरथवा निर्विशेषस्य सविशेषत्वेन प्रतिपत्तिरतोन्यथा सत आत्मनो-
न्यथैव प्रतिपत्तिस्तवेति तच्छ्लोकोक्तफल तवैवेति न साध्यविरुद्धत्व हेतोरिति ध्येयम् ॥
यत्तूपासनाया विशेषसत्यताया अप्रयोजकत्वमुक्त तद्विद्वन्मण्डनोक्तदोषाज्ञानात् नहि तत्र
विशेषाणामसत्यत्व उपासनैव न सभवतीत्युक्त किंतु विशेषाणामसत्यत्वे सविशेषब्रह्म
णोऽसत्यत्वापत्त्या वेदस्यातदर्थप्रतिपादकत्वापत्तिरुपासकाना चासदेव फल स्यात् ॥
किंच सविशेषोपासनायास्तुच्छफलत्वेऽन्यदेवोपासनापेक्षया तस्योत्कृष्टत्ववर्णनमसगत
स्यात् "सर्वत्र प्रसिद्धोपदेशा"दिति सूत्रविरोधश्च तत्र हि "सर्वं खल्विद ब्रह्मे" ति
वाक्येन सर्वस्य ब्रह्मत्व प्रतिपादित तच्चासत्यत्वेन घटते सर्वस्यासत्यत्वे तद्रूपस्य ब्रह्म
णोप्यसत्यत्वापत्तिस्तथा च शून्यवादापत्ति स्यात् ॥ अस्मन्मते सर्वस्य ब्रह्मरूपेण सत्य-
त्वान्नानुपपत्ति ॥ किंचोपास्यस्य मिथ्यात्वे "यथा क्रतुर्भवति तथेत प्रेत्य भवती" ति
श्रुत्या शाण्डिल्यविद्योक्तोपासनशीलस्य मिथ्यास्वरूपप्राप्तिरेव फल स्यान्न पारमार्थिक
"तन्निष्ठस्य मोक्षोपदेशा"दिति सूत्रविरोधश्च ॥ न च निर्विशेषब्रह्मनिष्ठस्य मोक्षोपदेशा
दिति तदर्थ इति वाच्यम् ॥ तच्छब्दस्योपक्रातवाचित्वात्पूर्वसूत्रेषु जगत्कर्तुरेवोपक्रात
त्वात्तस्य च त्वन्मते निर्विशेषत्वाभावात् ॥ सदेवेत्यादिविषयवाक्येपि सविशेष एव
त्वन्मते सच्छब्दप्रतिपाद्यस्तस्मात्तत्रापि स एवोपक्रमविषय ॥ उपक्रमोपसहारादिषड्विधा
तात्पर्यग्राहकस्यापि सविशेषविषयकत्वमेवातस्तत्रैव वेदस्य तात्पर्यमित्यवसीयते ॥ तथा
चोक्त-उपक्रमोपसहारावभ्यासो पूर्वताफलम् ॥ अर्थवादोपपत्ती च लिंग तात्पर्यनिर्णय
इति ॥ यत्तु (असन्नेव स भवतीति शून्यवादस्य निदा न त्वनिर्वचनीयवादस्ये ) ति
तत्तुच्छम् ॥ शून्यवादानिर्वचनीयवादयोर्विशेषाभावात् त्रैकालिकनिषेधप्रतियोगित्वेना
भिमतस्यानिर्वचनीयस्य तुच्छत्वात् किं कृतो विशेष इति वक्तव्यम् ॥ नहि प्रतीतिकृतो
विशेष इति वक्तु शक्य शशविषाणस्यापि कदाचित्प्रतीतिसभवात्, अधिक तु निरू
पितमधस्तात् ॥ अत एवासत्यमप्रतिष्ठ ते जगदाहुरनीश्वरमित्यादिना निर्वचनीय जगद्धी
कुर्वतामासुरत्वमुक्त भगवता ॥ तत्र मम भाव सत्तामात्मान वेत्यर्थं स्वीकृत्या-

(अयितु सकाशादाश्रितायामत्वा असच्छब्दार्थात् सविशेषान्निर्विशेषस्य भावशब्दार्थस्य च भिन्नत्व) मित्यादि यदुक्त तत्वतिप्राकृतवचनम् ॥ भावशब्दस्य स्वभाववाचकत्व त्यक्त्वा कृष्णस्यापि जीववद्देहादिक स्वीकृत्यार्थांतरकल्पनात् असच्छब्दस्य च न देह एव शक्तिरह स्वर्गं भोक्ष्य इत्यादावनुपपत्ते –महात्मानस्तु मा पार्थ दैवीं प्रकृतिमाश्रिता ॥ भजत्यनन्यमनसो ज्ञात्वा भूतादिमव्ययमित्यग्रिमवाक्येप्यसच्छब्देन देहस्यैव ग्रहणापत्त्या भूतादिमित्यस्याव्ययमित्यस्य चासगत्यापत्तेर्देहस्य त्वन्मते भूतादित्वाद्यभावात् ॥ एव च पूर्वापरानालोचनमूलत्वादुपेक्ष्यमेवैतत् व्याख्यानम् ॥ अत एव-एते त्वशकला पुस कृष्णस्तु भगवान् स्वयमित्युक्तम् ॥ नच प्रशसापर तदिति वाच्यम् ॥ इतरावताराणामिवास्याप्यशावतारत्वे तदधिकत्वानुपपत्त्या प्रशसाया एवानुपपत्ते वस्तुतस्तु कृष्णस्य साक्षाद्ब्रह्मरूपत्वात्तस्य करचरणादिक न प्राकृत किं त्वानदमात्रकरपादमुखोदरादीत्युक्तया ऽऽनदमात्रमेव ॥ तत्र प्राकृतबुद्धिस्त्वज्ञानादेव ॥ अत एव मानुषीं तनुमाश्रितेत्युक्त एतादृश मा ये जानति त आसुरनिश्चया इत्यर्थ ॥ एतेन यत्तु कृष्णस्तु भगवान्स्वयमित्यादिक प्रयुक्त, यत्तु करचरणादेरानदत्वमित्यत्र बीजमन्वेष्यमित्युक्त तन्न किंचित् तत्र श्रुतेरेव बीजत्वात् स्वकपोलकल्पनाया तु "तर्काप्रतिष्ठाना" दित्यादिसूत्रे मोक्षाभावादिरूप दूषण स्वयमेवोक्त व्यासै ॥ किंच ब्रह्मकल्पनेपि गौरवापत्त्या तदपि नसिध्येदिति विद्वन्मडनोक्तदूषण दुरुद्धरमेव स्यात् ॥ इति त्रिंशत्खडखडनाभासस्याभासत्वप्रदर्शनम् ॥ अथ तत्र निर्विशेषस्य विषयवाक्यानामित्यादेरेकत्रिंशत्खडखडनाभासस्याभासत्व प्रदर्श्यते ॥ अत्र सामान्यनिषेधप्रतिपादकत्वे पूर्वमेव दूषणगण स्योक्तत्वान्न सामान्यनिषेधकत्व सभवति ॥ तद्देशकालावच्छेदेन तत्तद्व्यक्तित्वेन देशकालयोरुपादानेऽननुगम बुद्धिविषयत्वेनोपादाने तु स्थूलकालस्यापि बुद्धिविषयत्वाद्घटात्तदभावयोरपि तद्देशकालावच्छेदेन सहावस्थितिसत्वाद्विरोधो न स्यात् । तत्कालीनबुद्धेरुपादानेपि पुरुषांतरीयतत्कालीनबुद्धिमादाय तद्दोषस्य दुर्वारत्वात् तत्कालीनेत्यादावपि स्थूलकालमादाय दोषाचेति ॥ यत्तु तदत्यताभावत्वादिक तद्विरोधप्रयोजकमित्युक्त तन्न साधीय ॥ तत्र विरोधो यदि सहानवस्थान तदा सयोगात्यताभावस्य सयोगेन सहानवस्थानाद्व्यभिचार यदि च तद्देशतत्कालावच्छेदेन सहानवस्थानमित्युच्यते तदा तच्छब्दाननुगमप्रयुक्तो दोषस्तदवस्थ एवेति दिक् ॥ किंच विषयवाक्यानुरोधेन सामान्यवाक्यस्थनञोप्युपसहारन्यायेन विशेषाभावबोधकत्वाल्लौकिकधर्मान् श्रुतिर्निषेधतीत्युक्त प्राक् तस्माद्ब्रह्मधर्मपु प्राकृतत्वादिशकानिवृत्यर्थं प्रापचिकधर्मानेव निषेधतीति । अन्यथा श्रुतेप्रतारकत्व स्यादसत्पदार्थग्राहकत्वात् ॥ नन्वसत्पदार्थस्य सत्वेन निरूपणे प्रतारकत्व भवति न स्वरूपनिरूपणे अत एवाहितमहिं जानातीत्यादि वाक्यप्रयोक्तुरपि प्रतारकत्वमन्यथा युता न स्यादिति चेन्न शुक्ताविद रजत पश्यैतद्रजत गृहाणेत्यादिवाक्यप्रयोक्तुरप्रतारकत्वापत्त्युन प्रतारकत्वस्य दुर्वारत्वात् ॥ मिथ्याभूतत्वतत्रब्रह्मण्यमसतामेव धर्माणां ग्राहकत्वात् असतश्च सत्वेन निरूपणेन प्रतारकत्व न च तथा श्रुत्या धर्म निरूपिता इति ध्येयम् ॥ यत्तु लौकिकशब्दन मायिकस्य ग्रहणादियुक्त तत्तुच्छम् ॥

लौकिकमायिकशब्दयोः पर्यायत्वाभावात् किंच लौकिकशब्देन मायिकस्य ग्रहणे वैदिकानां जुह्वादीनां स्वर्गादीनां न मायिकत्वं स्यात् । वैदिकशब्दस्यापि मायिक-समानार्थत्वमिति चेद्ब्रूषे तदा ब्रह्मणोपि मायिकत्वापत्तिस्तस्याप्यौपनिषदत्वात् ॥ आनंदमात्रकरपादमुखोदरादीत्यादिश्रुत्युक्तानामानंदस्वरूपकरपादोदरादीनां लौकिकत्वं मृषावदन् श्रुत्यर्थानभिज्ञत्वादुपेक्ष्यः ॥ यदि करपादादिदर्शनमात्रेणैव तेषां लौकिकत्वं मृषा तदा शशविषाणस्यापि लौकिकत्वं कुतो न ब्रूषे विषाणस्यापि लोके दृष्टत्वात् ॥ यदि च विषाणस्य लोके दृष्टत्वेपि शशविषाणस्यादृष्टत्वान्न लौकिकत्वमित्युच्यते तदा आनंदमात्रं कुत्र दृष्टं देवानां प्रियेण येन तत्र लौकिकत्वं प्रतिपाद्यते ॥ न च कर-पादादीनामानंदमात्रत्वं शशविषाणायमानमेवेति वाच्यम् ॥ श्रुतिप्रतिपाद्यत्वेन तथा वक्तुमशक्यत्वात् श्रुतिप्रतिपाद्येप्यनाश्वासे ब्रह्मण्यप्यनाश्वासेन बाह्यत्वापत्तिः ॥ नच सविशेषेऽनाश्वासेपि निर्विशेषे तस्य सत्त्वेन न दोष इति वाच्यम् ॥ श्रुतिप्रतिपाद्य-त्वाविशेषेऽपैकत्राश्वास अन्यत्रानाश्वासे प्रमाणाभावात् ॥ यदि सविशेषे नाश्वासश्चेत्तदा सविशेषस्योपक्रमे निरूपणमसंगतं स्यात् । नहि जन्मादिहेतुत्वं निर्विशेषे संभवति तस्मिन् कर्तृत्वादिस्वीकारे निर्विशेषत्वमेव न स्यात् ॥ नच निर्विशेषप्रतिपत्यर्थं शाखाचंद्र-न्यायेन तन्निरूपणमिति वाच्यम् ॥ उत्तरसूत्रेषु हेयत्वेन तस्यानुक्तत्वेन तथा निरू-पणस्य वक्तुमशक्यत्वात् ॥ अरूपमित्यस्मादनंतरमित्यादि प्रलापस्तु विद्वन्मंडनपंक्त्य-र्थाज्ञानविजृंभितत्वादुपेक्ष्यः ॥ किंच "तदात्मानं स्वयमकुरुत सच्च त्यच्चाभवत्" इत्यादि-श्रुतौ निर्विशेषसविशेषयोरैक्येन प्रतिपादनादेकस्य मिथ्यात्वमेकस्य सत्यमेकत्र तात्पर्य-मन्यत्र नेति कल्पनाया निर्मूलत्वात् ॥ तथा च श्रुतेर्निर्विशेष एव तात्पर्यमिति स्वीकुर्वतां सविशेषब्रह्मविचारकसूत्राणामानर्थक्यापत्तिर्दुर्वारैवेति ॥ तात्पर्याविषयीभूतार्थे संदेहनिवृत्तेर्निष्फलत्वात् नहि "वायुर्वै क्षेपिष्ठा देवते"ति वाक्यार्थे केनचिद्विचारः कृत इति दिक् ॥ इत्येकत्रिंशत्खंडखंडनाभासस्याभासत्वप्रदर्शनम् ॥ अथारूपवदेव हीत्यादिद्वात्रिंशत्खंडखंडनाभासस्याभासत्वं प्रदर्श्यते ॥ "अरूपवदेव हि तत्प्रधान-त्वा"दित्यादिसूत्रेषु यत्त्वयोक्तं तच्चाधस्तादेव खंडितम् ॥ किंचारूपवत्सूत्रेण निर्वि-शेषं ब्रह्म निरूप्यत इत्यपि ते भ्रमः । अरूपमित्यनुक्त्वा रूपवदित्युक्तेस्तथा च ब्रह्मणो व्यवहारविषयविश्वविलक्षणत्वमेव तेन सूत्रेण बोध्यते ॥ ननु "न स्थानतोपि परस्यो-भयलिंगं सर्वत्र हि"ति पूर्वसूत्रेण ब्रह्म निर्विशेषं सविशेषं वेति संदिह्य विचारः प्रवृत्तस्तत्रारूपवदिति सिद्धांतसूत्रेणापि निर्विशेषं सविशेषं वेति सिद्धांत एव वक्त-व्योन्यथा निश्चयो न स्यादिति व्यवहारविषयत्वप्रतिपादनेपि निर्विशेषमेव पर्यवस्य-तीति चेन्न ॥ तादृशसूत्रस्यापि त्वदभिमतार्थकत्वे सर्वत्र हीत्यत्र हेतुबोधकपदे निर्वि-शेषस्यैवोपदेशादित्यस्यार्थस्यासौत्रत्वेन तृतीयाध्याये शास्त्रे वा इदंशार्थकस्येदंशब्दस्य काप्यनुक्ततयानुवृत्तेरप्यसंभवेनाभ्युपगमैकशरणत्वात् "अशब्दमस्पर्श" मित्यादिविषयक-वाक्येपि तदुत्तरार्द्धे—"अनाद्यनंतं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते" इत्येवं रूपतच्छब्देन पूर्वप्रदर्शितध्रुवस्यैव परामर्शेन प्राप्तायाः सविशेषताया अनंगीकारे

विरोधस्यावारणीयत्वात् ॥ निर्विशेषमेव ब्रह्मेति सिद्धांतस्यात्रैव प्रदर्शने अरूपवत्सूत्रप्रणयनं व्यर्थमेव स्यात् ॥ अग्रिमसूत्रेण साध्यस्यात्र सिद्धवन्निर्देशोप्ययुक्तः स्यात् ॥ एवं च तादृशस्य तादृशार्थकत्वाभावान्नारूपसूत्रस्य निर्विशेषप्रतिपादकत्वमिति ॥ प्रकृतैतावत्त्वमिति सूत्रस्याह च तन्मात्रमिति सूत्रस्य त्वदुक्त्या आनंदमात्रकरपादमुखोदरादीत्यादिश्रुत्युक्तानामानंदस्वरूपकरपादोदरादीनां लौकिकत्वं वदन् श्रुत्यर्थानभिज्ञत्वादुपेक्ष्यः ॥ यदि करपादादिदर्शनमात्रेणैव तेषां लौकिकत्वं ब्रूयास्तदा शशविषाणस्यापि लौकिकत्वं कुतो न ब्रूषे विषाणस्यापि लोके दृष्टत्वात् ॥ यदि च विषाणस्य लोके दृष्टत्वेपि शशविषाणस्यादृष्टत्वान्न लौकिकत्वमित्युच्यते तदा आनंदमात्रं कुत्र दृष्टं देवानां प्रियेण येन तत्र लौकिकत्वं प्रतिपाद्यते ॥ न च करपादादीनामानंदमात्रत्वं शशविषाणायमानमेवेति वाच्यम् ॥ श्रुतिप्रतिपाद्यत्वेन तथा वक्तुमशक्यत्वात् श्रुतिप्रतिपाद्येप्यनाश्वासे ब्रह्मण्यप्यनाश्वासेन बाह्यत्वापत्तिः ॥ नच सविशेषेऽनाश्वासेपि निर्विशेषे तस्य सत्त्वेन न दोष इति वाच्यम् ॥ श्रुतिप्रतिपाद्यत्वाविशेषेणैकत्राश्वास अन्यत्रानाश्वासे प्रमाणाभावात् ॥ यदि सविशेषे नाश्वासश्चेत्तदा सविशेषस्योपक्रमे निरूपणमसंगतं स्यात् नहि जन्मादिहेतुत्वं निर्विशेषे संभवति तस्मिन्कर्तृत्वादिस्वीकारे निर्विशेषत्वमेव न स्यात् ॥ न च निर्विशेषप्रतिपत्त्यर्थं शाखाचंद्रन्यायेन तन्निरूपणमिति वाच्यम् ॥ उत्तरसूत्रेषु हेयत्वे न तस्यानुक्तत्वेन तथा निरूपणस्य वक्तुमशक्यत्वात् ॥ अरूपमित्यस्मादनंतरमित्यादि प्रलापस्तु विद्वन्मंडनपंक्त्यर्थाज्ञानविजृंभितत्वादुपेक्ष्यः ॥ किंच "तदात्मानं स्वयमकुरुत सच्च त्यच्चाभवत्" दित्यादिश्रुतौ निर्विशेषसविशेषयोरैक्येन प्रतिपादनादेकस्य मिथ्यात्वमेकस्य सत्त्वमेकत्र तात्पर्यमन्यत्र नेति कल्पनाया निर्मूलत्वात् ॥ तथा च श्रुतेर्निर्विशेष एव तात्पर्यमिति स्वीकुर्वतां सविशेषब्रह्मविचारकसूत्राणामानर्थक्यापत्तिर्दुर्वारैवेति ॥ तात्पर्याविषयीभूतार्थे संदेहनिवृत्तेर्निष्फलत्वात् नहि "वायुर्वै क्षेपिष्ठा देवते" ति वाक्यार्थे केनचिद्विचारः कृत इति दिक् ॥ इत्येकत्रिंशत्खंडखंडनाभासस्याभासत्वप्रदर्शनम् ॥ अथारूपवदेव हीत्यादेर्द्वात्रिंशत्खंडखंडनाभासस्याभासत्वं प्रदर्श्यते ॥ "अरूपवदेव हि तत्प्रधानत्वा" दित्यादिसूत्रेषु यत्त्वयोक्तं तच्चाधस्तादेव खंडितम् ॥ किंचारूपवत्सूत्रेण निर्विशेषं ब्रह्म निरूप्यत इत्यपि ने भ्रमः । अरूपमित्यनुक्त्वा रूपवदित्युक्त्या च ब्रह्मणो व्यवहारविषयविश्वविलक्षणत्वमेव तेन सूत्रेण बोध्यते ॥ ननु "न स्थानतोपि परस्योभयलिंगं सर्वत्र हि" ति पूर्वसूत्रेण ब्रह्म निर्विशेषं सविशेषं वेति संदिह्य विचारः प्रवृत्तस्तत्रारूपवदिति सिद्धांतसूत्रेणापि निर्विशेषं सविशेषं वेति सिद्धांत एव वक्तव्योन्यथा निश्चयो न स्यादिति व्यवहारविषयत्वप्रतिपादनेपि निर्विशेषमेव पर्यवस्यतीति चेन्न ॥ तादृशसूत्रस्यापि त्वदभिमतार्थकत्वे सर्वत्र हीत्यत्र हेतुबोधकपदे निर्विशेषस्यैवोपदेशादित्यस्यार्थस्यासौत्रत्वेन तृतीयाध्याये शाखे वा इदमर्थकस्यैतादृशशब्दस्य काप्यनुक्ततयानुवृत्तेरप्यसंभवेनाभ्युपगमैकशरणत्वात् "अशब्दमस्पर्श" मित्यादिविषयकत्वेपि तदुत्तरार्द्धे "अनाद्यनंतं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यत" इत्येवंरूपतच्छन्देन पूर्वप्रदर्शितध्रुवस्यैव परामर्शेन प्राप्ताया:

सविशेषतायां अनंगीकारे विरोधस्यावारणीयत्वात् ॥ निर्विशेषमेव ब्रह्मेति सिद्धांत-
स्याग्रैव प्रदर्शने अरूपवत्सूत्रप्रणयनं व्यर्थमेव स्यात् ॥ अग्रिमसूत्रेण साध्यस्यात्र
सिद्धवन्निर्देशोऽप्ययुक्तः स्यात् ॥ एवं च तादृशस्य तादृशार्थकत्वाभावादरूपसूत्रस्य
निर्विशेषप्रतिपादकत्वमिति ॥ प्रकृतैतावत्त्वमिति सूत्रस्याह च तन्मात्रमिति । सूत्रस्य
त्वदुक्तार्थकत्वे यथा दोषस्तथान्यत्र प्रतिपादितो ग्रंथगौरवभयाच्च नात्र लिख्यते पूर्वखंडे
तत्प्रायश्चेति संक्षेपः ॥ यत्तु ( तत्स्वभावत्वं ब्रह्मणि न संभवतीति तु पूर्वपक्षि-
णेष्टापत्त्या परिहर्तुं शक्य ) मित्युक्तं तन्मंदम् ॥ तत्रेष्टापत्तौ श्रुतीनां ब्रह्मपरत्वा-
पत्तेर्दुर्वारत्वात् ॥ नच तादृशार्थस्य सूत्रादलाभ इति वाच्यम् ॥ हिशब्दस्यैव
तादृशार्थबोधकत्वात् ॥ एतेन ( तत्सूत्राक्षराल्लभ्यश्चायमर्थ ) इति निरस्तम् ॥ त्वदभि-
मतार्थस्यापि सूत्रादलाभेन दोषतौल्याच्च ॥ आकाराणां प्रपंचमध्यपातित्वकथने दोषो-
द्भावनं तु तत्कथनाभिप्रायानवबोधात् नहि तत्राकाराणां प्रपंचमध्यपातित्वं सिद्धां-
तितं किं तु यद्याकाराणां प्रापंचिकत्वं भवेत्तदैवं स्यादित्यादिना संभावनामात्रमेव ॥
अत एवाग्रे न त्वेवमित्यादिना तत् खंडितम् ॥ निर्विशेषतायाः प्रपंचानंतर्गतत्वक-
थनमपि साहसमात्रम् ॥ अंतर्यामितया सर्वहृदयस्थितत्वेन प्रपंचांतर्गतत्वात् ॥ अत
एव "गुहां प्रविष्टावात्मानौ हितदर्शनादि"त्यादिसूत्रे तादृशार्थ एव निरूपित इति
दिक् ॥ तदंतरस्य सर्वस्येत्यादिश्रुत्या च प्रपंचांतर्गतत्वं प्रतिपादितम् ॥ नच तेषां
मायिकाधिष्ठानबोधकत्वमिति मंतव्यं तद्बोधने फलाभावात् स्वरूपप्रतिपादनस्यैव प्रकृ-
तत्वात्तस्यात्प्रपंचांतर्गतत्वेऽपि प्रपंचविलक्षणं तदिति प्रतिपादितं अनधीत्येत्यादिना
गालिप्रदानं त्वादृशानामुचितमेवासुरप्रकृतित्वात् परं तु ब्रह्मणि व्यवहारविषयप्रपंच-
विलक्षणत्वेऽपि न त्वदभिमतनिर्विशेषत्वसिद्धिर्येन भक्षित इत्यादिन्यायस्यावसरस्त्वदुक्तः
स्यात् किंतु प्रपंचव्यवहारविषयत्वाभावेऽपि शास्त्रीयव्यवहारविषयत्वं वर्तत एवा-
न्यथा शास्त्रवैफल्यं स्यात् "तं त्वौपनिषदं पुरुषं पृच्छामी"त्यादिश्रुतिविरोधश्च स्यात्
तस्माद्व्यवहार्यत्वेऽपि लौकिकव्यवहाराविषयत्वादव्यवहार्यमयमेवार्थो व्यासैः "प्रकाशा-
दिवच्चावैयर्थ्य"मिति सूत्रेण दर्शित इत्यलं विस्तरेण ॥ यदपि अरूपमित्युक्ते सविशे
षवाक्याचारितार्थ्यशंकायां तत् प्रधानत्वादित्युक्तमिति तच्चरितार्थमिति प्रलपितं वस्तु-
च्छम् ॥ तत्प्रधानत्वादित्यस्य ब्रह्मप्रधानत्वान्निर्विशेषब्रह्मप्रधानत्वादिति त्वदभिमतार्थ-
कत्वेऽपि सति शेषवाक्यानां श्रुतितात्पर्यविषयनिर्विशेषपरत्याभावादचारितार्थ्यशंकाया
दुःपरिहरत्वादरूपमित्युक्तावेव सामंजस्ये रूपवदिति कथनस्य वैयर्थ्यात् ॥ यत्तु ( दर्श-
यति चाथो अपि स्मर्यत इत्यस्य निर्विशेषब्रह्मपरत्वा ) दित्युक्तं तत्तदर्थाज्ञानात् ॥
नहि तत्सूत्रस्य निर्विशेषब्रह्मपरत्वं किंतु विरोधाशंकायां तत्परिहारत्वेन सूत्रेण क्रियते
कोऽसौ विरोध इति चेच्छृणु ब्रह्मजगत्समवायिकारणमिति वेदे प्रतिपादितं कारणधर्माश्च
कार्ये संभवंत्यन्यथा असतः सत्त्वास्वीकारापत्त्या श्रुतिविरुद्धकल्पनापत्तिः तस्मात्ते ब्रह्मण
एवेति वक्तव्यम् ॥ निर्गुणं निष्कलमित्यादिना निषेधोऽपि श्रूयत इति विरोधमाशंक्य
परिहरति "दर्शयति चाथो अपी"त्यादिना श्रुतिरेव जडजीवधर्माणां ब्रह्मण्यभावं

दर्शयति "द्वेवाव ब्रह्मणो रूप" इत्युपक्रम्य "अथात आदेशो नेती" त्यादिना निषेधमाह इतिशब्द प्रकारवाची। ब्रह्मपचमहाभूतानि भवतीति न तदेवाग्रे व्याख्यानेन दर्शयति नह्येतस्मादिति हि युक्तोयमर्थ यत एतस्माज्जात तन्न हि कार्यकारणयोरेक प्रकारो भवतीति द्वितीयनेतीत्यस्यार्थो विवृत्त किं तस्मात्परमस्तीति नतु समवायित्वमात्रमेव ब्रह्मण किंतु निमित्तत्वमपि तेन प्रपचातिरिक्तस्य ब्रह्मणो विद्यमानत्वात्प्रपचधर्मवचन तस्मिन्नौपचारिकमेवेति युक्त श्रुत्यैव तथा प्रतिपादनात् ॥ श्रुतेरन्यार्थनिराकरणायाह "अपि च स्मर्यते" अनादिमत्पर ब्रह्म न सत्तन्नासदुच्यते । सदसच्छब्दप्रतिपाद्य पचमहाभूतव्यतिरिक्त ब्रह्म उच्यत इत्यनेन प्रपचधर्मो भगवति उच्यते न तु तत्तद्धर्मा भवतीति ज्ञापयति। अधिक हि भाष्यादितोवसेयम्। "दर्शनाच्चेति" सूत्रस्य तु श्रुतिषु तद्धर्मदर्शनादित्यर्थ । कुत परमेश्वरोपासनाया पुरुषाणा प्रत्यक्षेणापि भगवतस्तथा भानादिति चकारार्थस्तथा च वैश्वानरविद्याया प्रादेशमात्रस्याभिविमानत्वमन्यत्रापि "यदेकमव्यक्तमनतरूप"मित्यनेकस्यानतरूपत्व प्रतिपादितमत सकलविरुद्धधर्माश्रयत्व भगवतो दर्शित "अत एव चोपमा सूर्यका"दिवदित्यत्रापि स एवार्थो दर्शित । एतेन तत्सूत्रार्थाज्ञानमूलका अत एव चोपमा सूर्यकादिवदित्यादिप्रलापो निरस्त । तस्य पित्रत्या दिना गालिप्रदान तूभयभ्रष्टस्य युक्तमेव बुद्धिविरहीनाना वाक्पारुष्यमेव बलमिति लोके दर्शनात् ॥ यत्तु (असमासस्थले नञो भेदवति लक्षणया पदार्थातरेऽभेदेनान्वयोपि व्युत्पत्तिविरुद्ध) इति प्रलपित तत्र देवाना प्रिय प्रष्टव्यस्तादृशव्युत्पत्ते किं स्वरूप यस्याविरोध आपाद्यते तत्र यदि निपातातिरिक्तस्थले नामार्थयोरभेदातिरिक्तसबधेनान्व यबोधोऽव्युत्पन्न इति ब्रूयात्तदा निपातनामार्थयोरभेदान्वयबोधस्य व्युत्पत्त्यविरुद्धत्वेपि भेदान्वयबोध व्युत्पत्तिविरोधाभावात्तादृशविरोधापादनमसगतमेव। घटो न पट इत्या दावपि घटप्रतियोगिकाभिन्नभेदवदभिन्न पट इत्यर्थ इष्टापत्ति कृत्वा निपातातिरिक्त पदमनुक्त्वा नामार्थयोरभेदान्वयबोधस्यैव व्युत्पत्तिसिद्धत्वाच्चेति एतावत्प्रकृतशब्दयोस्तु स्यार्थकथनमित्यादिदोषोद्भावन तु तत्रत्यग्रथाभिप्रायानवबोधात् ॥ अत एवोक्त–भावा वबोधविहितो न दुनोति दोष इति प्रकृतैतावत्त्वेतिसूत्रस्य त्वदुक्तरीत्यार्थकरणे तु मूर्ता मूर्तप्रतिषेधस्य प्रकृत प्रतिषेधतीत्येतावतैव सिद्धेरेतावत्त्वमित्यस्य एतावत्वपदाददरे च प्रकृतपदस्यावैयर्थ्यप्रसक्तेर्दुर्वारत्वात् ॥ किंच मूर्तामूर्तरूपद्वय यत्प्रकृतत्वेन विवक्षित तस्य प्राधान्यमभिमत तच्चत्तदा केन रूपेण तदिति वक्तव्य स्वेन रूपेण ब्राह्मणे वा नाद्य ब्रह्मणो रूप इति विशेषणवैयर्थ्यात् ॥ द्वितीये तु ब्रह्मण एव प्राधान्यमिति ब्रह्मण एवात्रोपदेश्यत्वात् ॥ नच सबधपष्ठ्यतपदेन बोधनाद्ब्रह्मणोऽप्राधान्यमिति वाच्यम् ॥ राहो शिर इति वदभेदपि पष्ठ्या सभवे नाप्राधान्यमेवेति नियमाभावा "दानद ब्रह्मणो विद्वा" नित्यादौ त्वयाप्यभेदे पष्ठ्या स्वीकृतत्वात् ॥ एव च द्वे वा ब्रह्मणो रूपे इत्यत्र ब्रह्माभिन्ने रूपे इत्येवार्थ तथा च ब्रह्मण प्रकृतत्वात्तस्मिन्नेतावत्व परिच्छिन्नत्व प्रतिषेधतीत्येव व्याख्यानमुचितम् ॥ अन्यच्च यत्त्वयोक्त तत्पूर्वमेव निरस्तम्। इति द्वात्रिं शत्खडखडनाभासस्याभासत्वप्रदर्शनम् ॥ अथ तत्र निर्विशेषेत्यादेस्त्रयस्त्रिंशत्खडखडनाभा

वृत्तिव्यापकत्वबोधकानी ) त्यादि यदुक्तं तत्रोच्यते ॥ "आत्मावारे द्रष्टव्य" इत्यत्र सत्त्वाभासत्वं प्रदर्श्यते ॥ ( तत्र निर्विशेषस्य ज्ञेयत्वादिबोधकानि वाक्यानि वृत्त्युपहितस्य दर्शनं निर्विशेषस्य विधीयते सविशेषस्य वा ॥ नाद्यः निर्विशेषस्य त्वन्मतेऽदृश्यत्वात् ॥ न च वृत्तिव्याप्यत्वेपि निर्विशेषस्य फलव्याप्यत्वाभावाददृश्यत्वमुपपद्यत इति वाच्यम् ॥ वृत्तिव्याप्यत्वस्यापि निर्विशेषेऽभावात् "यन्मनसा न मनुते" "यतो वाचो निवर्तंते अप्राप्य मनसा सहे"त्यादि श्रुतौ मनःपदेन वृत्तेरेव ग्रहणस्य त्वन्मते युक्तत्वाद्वृत्तिं विना मनोग्राह्यत्वस्याभावात् ॥ नच वृत्त्युपहितस्य वृत्तिव्याप्यत्वमित्यपि युक्तं वृत्त्यु- पहितस्य सविशेषत्वेन निर्विशेषत्वानुपपत्तेः ॥ किंचोपाधिरूपाया वृत्तेरभिन्नत्व आत्मा- श्रयो भिन्नत्वेन्योन्याश्रयाद्यापत्तिरिति ॥ मनसैवेदमाप्तव्यमित्यादावपि वृत्तेर्ग्रहणे विरोधः फलग्रहणे मनःपदस्य तत्रापूर्ववृत्तिकल्पने मूलं वक्तव्यम् ॥ किंच प्रतिबिंबा- संभवस्य पूर्वं विस्तरेण प्रतिपादितत्वेन कल्पस्यैवासंभवेन फलव्याप्यत्वकथनं तेनैव निरस्तं तस्मात् "यन्मनसा न मनुत" इत्यादिवाक्यानामसंस्कृतमनोविषयत्वमत एव–दृश्यते त्वग्रया बुद्ध्येत्यादिभिः संस्कृतबुद्धिवेद्यत्वमुक्तमन्यथा तद्विरोधापत्तेः ॥ नच फलत्वे- नाभिमतस्य चित्प्रतिबिंबस्य त्वन्मते बुद्धिशब्दवाच्यत्वमस्ति येन तत्परत्वं कल्पयेः ॥ नापि द्वितीयः ॥ सविशेषज्ञानस्य मोक्षसाधनतायास्त्वयानुपगमात् ॥ एवं "तमेव विदि- त्वातिमृत्युमेती" त्यत्रापि विकल्पदोष ऊह्यः ॥ ज्ञानशब्दस्य स्फुरणार्थकस्य वृत्तिव्या- प्यर्थकल्पने गौरवम् ॥ यत्त्ववतारूपपरं भगवद्वाक्यमित्याद्युक्तं तत्रोच्यते ॥ किम- वतारूपभगवज्ज्ञानान्मोक्षस्त्वयाभ्युपगम्यते न वा ॥ आद्ये निर्विशेषे वृथैव तवाग्रहः श्रुत्या तस्य प्रतिपादनात्स इति चेच्छ्रुत्या सविशेषस्यापि प्रतिपादनादुभयविधभगवतो रूपमिति पक्षं त्यक्त्वा सविशेषस्य मिथ्यात्वं श्रुत्यसंमतं किमिति स्वीक्रियते तस्मा- दासुरमात्र एवात्र कारणमत एव तन्मायामोहितत्वात्प्रेतादिदृष्टांतप्रणयनं कृतम् ॥ द्वितीये–त एव पश्यंत्यचिरेण तावकं भवप्रवाहोपरमं पदांबुजमित्यादिवाक्यविरोधः तद्- दर्शनस्य मोक्षासाधनत्वात् ॥ किंच मायिकत्वाविशेषेपि तद्दर्शनमुपासनादिजन्यतत्कृ- पाहेतुत्वेनांगीकुर्वन्नुपेक्ष्य एवान्यथा घटादिदर्शनेपि तत्कृपैव कुतो न हेतुरित्यपि विभाव- नीयम् ॥ किंच तद्रूपस्य मायिकत्वे मया प्रसन्नेन तवेत्याद्युक्तिर्विरुध्यते मायाया व्यामोहार्थत्वाद्भगवत्कृपायाश्च व्यामोहोपघातकत्वात् सूत्रे संराधनपदं सम्यक् राधनं संराधनमिति व्युत्पत्त्या संराधनपदस्योपासनापरत्वादर्जुनादीनामुपासनया भगवत्सा- क्षात्कारः ॥ एतेन अपि संराधने इत्युक्तत्वेन प्रतिज्ञाविरोध अर्जुनादिदर्शनादेः संरा- धनेऽभावादित्यादिकं निरस्तम् ॥ संराधनपदस्य समाधिपरत्वमेवेत्यत्र नियामकाभावात् आङ् पूर्वस्य तथात्वेपि संपूर्वस्यातथात्वमित्याद्युक्तिस्तु निर्मूला। धातूनामनेकार्थत्वादुप- सर्गाणां च तात्पर्यवशात्तत्तदर्थद्योतकत्वादत एवोक्तं–उपसर्गेण धात्वर्थो बलादन्यत्र नीयत इति ॥ यच्च वेदैरित्यस्य सविचारैरित्यर्थकरणे द्रष्टव्य इत्यादिश्रुतिविरोध इत्युक्तं तन्न सम्यक् ॥ सामान्यतोधीतैरिति स्वसम्मतार्थकरणेपि श्रोतव्य इत्यादिश्रुति- विरोधस्यावारणीयत्वात् ॥ यदि सामान्यतोध्ययनमात्रेण दर्शननिषेधेपि मननसहिता-

ध्ययनेन तद्दर्शनस्य श्रुतौ विहितत्वान्न विरोध इत्युच्यते तदा विचारसहितैर्वेदैस्त दभावप्रतिपादनेपि निदिध्यासनसहितैस्तद्दर्शनस्य श्रुत्या प्रतिपादनान्न विरोध इति विरोधापादनमविचारमूलकमेव ॥ निदिध्यासनत्वं च भक्तित्वव्याप्यं तेन भक्त्या त्वनन्यया लभ्य इत्यनेनैकवाक्यतया न तद्वचनविरोध इति बोध्यम् ॥ सर्वेषां भगवद्दर्शने समानेपि केषांचिन्मोहानपगमे भगवदिच्छैव नियामिका ॥ यत्तु तदपगमसाधनाभावादेव मोहानपगमो न तु तत्र भगवदिच्छाहेतुरित्युक्तं तत्तुच्छम् ॥ त्वयापि तदपगमे साधनाभावहेतुकर्महेतुत्वेन "एष ह्येव साधु कर्म कारयती" त्यादि श्रुत्यनुरोधेन भगवदिच्छाया कल्पनीयत्वेन तस्यैव कारणत्वस्य युक्तत्वात् ॥ न चैवं भगवतो नैर्घृण्यापत्तिरिति वाच्यम् ॥ लीलाया नैर्घृण्यासंभवादन्यथा सर्वेषां तद्दर्शनान्मोक्षसंभवेन लीलोच्छेदः स्यात् । अत एवोक्तं "लोकवत्तु लीलाकैवल्य" मिति एवं च लीलार्थंकृता या मर्यादा परपर्यायरूपा भगवदिच्छा तद्बोधकान्येव मयानुकूलेनेत्यादिवाक्यानीति भागवतवचनविरोधोपि न संभवतीति ॥ एतेन एवं चेत्यादिकं सर्वं निरस्तम् ॥ यद्दर्शनं इत्याद्युक्त्वा "भिद्यते हृदयग्रंथि" रिति श्रुतिविरोधो ज्ञानं त्वज्ञानात् धनुर्गृहीत्वौपनिषदमित्यादितत्प्रकरणस्थवाक्यानुरोधेनानन्यभक्त्या तद्दर्शनस्यैव तत्फलहेतुत्वोपगमादत एव "शरं ह्युपासानिशितं सदधीते" त्याद्युक्त (स्वतेजसा स्वस्य विरोधाभावे कन तेजसा प्रकाशे विरोध इति देवानां प्रियः प्रष्टव्यः) इत्यादिना यदूचे तत्र पूर्वापरग्रथनानभिज्ञ एव वक्तव्यः । पूर्वमलौकिकतेनोदर्शने लौकिकानुसरणं लील्यैवेत्युक्त्वा प्रकाश्यत्वमपि लीलयैवेत्युक्तम् । तत्र च प्रकाश्यत्वस्वीकारे सूर्यादिप्रकाश्यत्वमेव वक्तव्यम् ॥ एवं च "न तत्र सूर्यो भाती"ति श्रुतिविरोध इत्याशंका स्यात्तन्निवृत्त्यर्थमुक्तं यदादित्य इति तथा चादित्यादितेजसोपि ब्रह्मतेजोरूपत्वेन तत्तेजःप्रकाश्यत्वेपि विरोध इति प्रतिपादितम् ॥ श्रुतिस्तु घटादीनां यथा स्वभिन्नतेजःप्रकाश्यत्वं तथा ब्रह्मणो नेति निषेधति ॥ एतेन किंचेदानीमित्यादिना यदुक्तं तन्निरस्तम् ॥ यच्च त्वया अरूपवत्सूत्रार्थमजानता"प्रकाशादिवच्चावैयर्थ्य" मिति सूत्रं व्याख्यातं तद्व्याख्यानं च पूर्वमेव दूषितम् ॥ भक्त्या त्वनन्ययेत्यादिवाक्यस्य सविशेषपरत्वे प्रमाणाभावः शुद्धब्रह्मण्येव सामर्थ्यवशात्सपक्षपत्तौ निर्विशेषसविशेषयोर्भेदः स्वकपोलकल्पनयोक्त्वा तत्तद्वाक्यानां विप्लवो वृथैव ॥ माया च त्वदभिप्रेता पूर्वमेव निरस्ता ॥ अत एवात्मारामोपि सकामः प्रियवियोग्यपि व्यापकत्वाद्वियोगेन दुःख प्रजल्पत्यानंदरूपः सर्वज्ञः सकलश्रुतिप्रतिपादितविरुद्धधर्माश्रयत्वादिति संक्षेपः ॥ इति त्रयस्त्रिंशत्खण्डखण्डनाभासस्याभासत्वप्रदर्शनम् ॥ अथ तत्र निर्धर्मिकपदार्थस्येत्यादे श्चतुस्त्रिंशत्खण्डखण्डनाभासस्याभासत्वं प्रदर्श्यते ॥ लोकरीत्यनुसारेण यथार्थनिर्णयो लोके यद्यथा दृष्टं तस्य तथैव निश्चयः कार्यो निर्धर्मिकपदस्याथा लोके न प्रसिद्धं किंतु वेदगम्यस्तत्रापि न शक्तिगम्यं किंतु लक्ष्यं एवंति लोकानुसारिणं स्वाभिमतं ब्रह्मापि न सिध्यदित्यभिप्रायस्तादृशाभिप्रायमज्ञात्वैव वस्तुमात्रं गृह्यत इत्यादि प्रलपितम् । यत्तु (शब्दसमवायिकारणमाकाशमित्यादिसद्प्रयोगानुपपत्त्या शब्दाधर्मोपलक्षिते तादृश

इति तन्मन्दम् । आकाशः शब्दसमवायिकारणमित्या-
शक्तिर्वाच्येति तत्राव्यभिचार ) इति तन्मन्दम् । आकाशः शब्दसमवायिकारणत्वावच्छिन्ने
दाकाशपदस्याष्टद्रव्यातिरिक्तद्रव्यत्वावच्छिन्ने शक्तिर्न तु शब्दसमवायिकारणत्वावच्छिन्ने
येत त्वदुक्तदोषेण तादृशधर्मोपलक्षिते शक्तिः कल्प्येत तथा च यद्यत्पदशक्तिविषय-
त्वाश्रयं तत्तन्निर्धर्मिकमिति व्याप्तौ पदशक्तिविषयेप्याकाशे निर्धर्मिकत्वाभावस्य सत्वान्न
व्यभिचारः ॥ किंच शब्दाश्रयत्वोपलक्षिते शक्तिस्तत्पदान्निर्धर्मिको बोध इत्यथवाकाशस्य
निर्द्धर्मिकत्वमित्यपि तस्य भ्रम एव ॥ तद्धर्मोपलक्षिते शक्तिरिति मतेपि अष्टद्रव्याति-
रिक्तद्रव्यत्वावच्छिन्न आकाशपदस्य शक्त्युपगमादत एव नानाधर्मावच्छिन्नस्यैकपदवाच्य-
त्वासंभवादिति हेतुस्तैर्दर्शितः ॥ शक्तिवादे चास्तु वा पदादपि निर्विकल्पमित्युक्त्वा
निर्विकल्पकत्वं च तदंशे तत्तत्पदोपस्थाप्याप्रकारत्वं नतु तदंशे सामान्यतो निष्प्रकारत्वं
विभक्त्युपस्थापितैकत्वादीनां तदंशे प्रकारत्वोपगमादित्युक्तं भट्टाचार्यैः किंचेत्यादिना
जातिशक्तिपक्षे गोत्वादेर्निर्धर्मिकस्यैव पदार्थत्वमस्तीति यदुक्तं तदपि न किंचित् ॥ गोत्वं
गोपदशक्यमिति शक्तिज्ञाने गोत्वस्य निर्द्धर्मिकस्य भानासंभवात् ॥ गौर्गोपदशक्येत्यत्रापि
गोरेव शक्याश्रयत्वेन भानान्न गोत्वस्य पदार्थत्वमतो जातिशक्तिपक्षेपि न गोत्वस्य
निर्द्धर्मिकतया पदार्थता ॥ श्रुते निर्गुण एव तात्पर्यं न स गुण इत्यत्रापि विनिगमकं
दुर्लभं येन तत्रैव तात्पर्यमिति त्वत्कथनं संगच्छेत तात्पर्यग्राहकाणामुपक्रमादीनामु-
भयत्र तुल्यत्वात् ॥ किंच यदि लोकविरुद्धं न स्वीकर्तव्यमित्येव ते नियमस्तदा
प्रकाशतमसोरपि न परस्परमाश्रयाश्रयिभावो लोके दृश्यत इति सोपि प्रकाशरूपे
ब्रह्मण्यविद्यां तमोरूपां स्वीकुर्वता त्वया कथं त्यक्तः ॥ श्रुत्यर्थस्तु लोकरीत्यैव विचार्य
इति वदन्प्रष्टव्यः लोकरीत्येत्यस्य कोऽर्थः किं लोके यद्दृष्टं तदेव श्रुतितो प्रतीतमंगी-
कार्यमुत लोके यादृशं दृष्टं तत्सजातीयं श्रुतितोवगंतव्यम्, नाद्यः यागादेर्लौकिकत्वे
श्रुतेरनुवादकत्वापत्त्याऽप्रमाणत्वापत्तिः नापि द्वितीयः निर्द्धर्मिकब्रह्मणः सजातीयस्या-
भावात्तस्यिन्ननुपपत्तिस्तदवस्थैवेति ॥ भगवति विरुद्धधर्मवत्त्वं तु श्रुतितोवगम्यते ॥
मृत्सा भक्षणोलूखलादिप्रसंगेष्वपि यशोदादिभिर्विरुद्धा धर्मा दृष्टा व्यासादिभिश्च पुरा-
णेषु प्रतिपादिता इति ॥ एतेन विरुद्धा धर्मा इत्यादिकं प्रत्युक्तम् "दर्शनाच्च" त्यनेन
सूत्रेणाप्ययमेवार्थः प्रतिपादितः ॥ नच मायया तादृशधर्मा भगवता प्रदर्शिता इति
वाच्यम् ॥ मायापदेन सामर्थ्यं चेत्तदेष्टापत्तिः । अविद्या तु पूर्वमेव निरस्ता ॥ त्वद्ग्रंथेप्यपि
मन्मायायाः सदसद्विलक्षणत्वं स्वाश्रयत्वेनाभिमतनिष्ठाभावप्रतियोगित्वं चांगीकृत्य
ब्रह्माश्रितत्वं तस्याः स्वीकृतं तदपि पूर्वापरविरुद्धत्वादसंगतम् ॥ व्यामोहार्थं चेति तेन
तस्या ब्रह्माश्रितत्वानंगीकारोक्तिरसद्ग्रंथानवलोकनादिति प्रलपितमपास्तम् ॥ मायाया
उपाधिभूताया ब्रह्मगतविशेषकल्पकत्वमिति मते तस्योपाधित्वप्रयोजकं किमिति
वक्तव्यम् ॥ न च तस्यानादित्वान्न किंचिदपि प्रयोजकमिति वाच्यम् ॥ तस्या अनादित्वे
"सदेव सौम्येदमग्र आसी" दिति श्रुतिविरोधः ॥ नच तस्या ब्रह्मस्वरूपातिरिक्ताया
असत्वान्न विरोध इति वाच्यम् ॥ अधुनापि तस्यास्तादृशत्वादग्र आसीदित्यंशा-
. . . नैवेति । ईश्वरेच्छायाश्च तत्प्रयोजकत्वं पूर्वमेव विस्तरेण खंडितमन्यत्सर्वं पूर्व-

प्रायमिति संक्षेपः ॥ इति चतुस्त्रिंशत्खंडखंडनाभासस्याभासत्वप्रदर्शनम् ॥ अथ तत्र प्रादेशमात्रमित्यादेः पंचत्रिंशत्खंडखंडनाभासस्याभासत्वं प्रदर्श्यते ॥ प्रादेशमात्रस्याभिविमानत्वमुक्तं श्रुतौ तत्र प्रादेशमात्रत्वं मायिकमिति यदुक्तं तद्भावाज्ञानमूलकं तस्यौपाधिकत्वस्योक्तत्वात् सूच्याकाशवत् ॥ किंच प्रादेशिकत्वमेव स्वाभाविकमभिविमानत्वमेव मायिकमित्येव कुतो नोक्तं श्रुत्या मायिकत्वेनाप्रतिपादनादिति चेत्प्रादेशिकत्वस्य मायिकत्वं कुत्र श्रुत्या प्रतिपादितं येन तस्य तथात्वमंगीकरोषि "अणीयान्त्रीहेर्वा यवाद्वा ज्यायानाकाशाज्ज्यायान् दिव" इत्यत्रोभयविधत्वस्यैव श्रुत्या प्रतिपादितत्वेप्येकतरपक्षपाते बीजाभावः ॥ किंच पुनः पुनः सर्वं मायिकमित्येव दृढीकुर्वता मायावादित्वं मिथ्यावादित्वं च स्वस्मिन् प्रकाश्यते ॥ "रसो वै सः रस ह्येवायं लब्ध्वानंदी भवती "त्यत्र रसशब्दस्य शृंगारपरत्वे विटवादित्वं चेत्तवापि तत्कुतो न स्यात् ॥ त्वयापि तादृशश्रुतिघटकस्य रसशब्दस्यानंदार्थकतायाः स्वीकृतत्वात् शृंगारस्यापि रतिपर्यायस्यानंदरूपत्वात् ॥ न चानंदसामान्यस्य रसरूपत्वेपि न शृंगारस्य तद्रूपत्वमिति वाच्यम् ॥ "एतस्यैवानंदस्यान्यानि भूतानि मात्रामुपजीवंती"त्यादि श्रुत्याऽऽनंदमात्रस्यैव त्वन्मतेपि ब्रह्मस्वरूपत्वात् ॥ ननु तस्यांतःकरणवृत्तिरूपत्वान्न ब्रह्मत्वमिति वाच्यम् ॥ तादृशस्य रसस्यानन्यभक्तिलभ्यत्वाद्यादृशी भक्तिस्तथा तत्राविर्भवतीत्यभ्युपगमेन लौकिकशृंगारवद्वृत्तिविशेषत्वाभावात् ॥ त्वन्मतेप्यानन्दस्य लोके वृत्तिविशेषात्मकतया तदोपतौल्यात् ॥ ईश्वररमणस्य मायिकत्वमिति त्वदुक्तौ मायिकत्वेन मिथ्येति विवक्षितं चेद्रमणस्य स्वस्वरूपात्मकस्य मिथ्यात्वे स्वरूपस्य मिथ्यात्वापत्तिः ॥ श्रीकृष्णस्य तु "एते चांशकलाः पुंसः कृष्णस्तु भगवान्स्वय"मित्युक्तिविरोधादंशत्वम् ॥ श्रुतीनां व्यवस्था त्वदुक्ता तु कपोलकल्पितत्वान्निर्मूला उपेक्षणीया च भगवति सर्वभवनसामर्थ्येनैव सर्वस्य श्रुतिबोधितस्योपपत्तावौपाधिकत्वादिकल्पनस्यान्याय्यत्वात् ॥ नच सामर्थ्यं मायैवेति वाच्यं मानाभावात् ॥ नहि सामर्थ्येन कुर्वन्मायया करोतीति व्यवह्रियतेऽन्यथा हनुमद्भीमादिकृतकर्मणां मायिकत्वव्यवहारः स्यात् ॥ यदपि मर्यादामार्गविरुद्धः पुष्टिमार्गो नादरणीय इत्यादिप्रलपितं तदप्यज्ञानात् ॥ मर्यादामार्गे स्त्रीणां स्वपुरुषं परित्यज्य परपुंसि रतानां नरको भवति गोपीनां तथाविधानामपि श्रीमद्भागवतादिषु मोक्षः श्रूयते स च विरुद्धः स्यात्तस्मादकामेनापि शास्त्रप्रामाण्यमभ्युपगच्छता पुष्टिमार्गः स्वीकरणीय. देवयानपितृयानवन्मार्गद्वयस्वीकारेपि न दोष इत्यवधेयम् ॥ अन्यथा संतमिति वचनोक्तं फलं तु ईश्वरपरतंत्रं स्वस्वरूपं स्वतंत्रतया अंगीकृत्य यथेष्टाचरणशीलानामेव भवतीति ॥ अत एव तेषामात्महंतृत्व "असुर्या नाम ते लोका "इति मंत्रोक्तफलमपि तेषामेव ॥ किंच सर्वस्य स्वस्मिन्कल्पितत्वं वदतो ध्यानधारणासमाधिधर्माचरणहीनामपि कल्पितत्वं स्वीकुर्वता तत्सर्वं यथा त्यक्तं तथा राजसेवाधनार्जनादिकं परनिंदात्मसंस्तुत्यादिकमपि मिथ्येति निश्चित्य कुतो न त्यक्तं यदि च "नाभुक्तं क्षीयते कर्मे"ति श्रुत्या कर्माधीनतया क्रियत इत्युच्यते तदा येनोग्रेण प्रारब्धाख्येन कर्मणा ध्यानादावरुचिर्निन्दादौ रुचिस्तवाजनिष्ट तेनैवैतत्फलं

नरकादिकमपि समागस्यं भविष्यतीत्यवधार्य यथेष्टाचरणशीलत्वात् ॥ अत एवोक्तं—
बुद्धाद्वैतसतत्त्वस्य यथेष्टाचरणं यदि ॥ पशूनां तत्त्वदृशां चैव को भेदोऽशुचिभक्षणे ॥
त्रिदुराहादितुल्यत्वमाकांक्षीन्नत्त्वविद्भवान् ॥ सर्वधीदोषसंख्यागाल्लोकैः पूज्यश्च देववत् ॥
तथा चैतत्सर्वं श्रुतिस्मृतिविशिष्टोक्तमनाचरता तद्विपिद्धमाचरता च विहितस्याननुष्ठा-
नादिति स्मृतिप्रदर्शितफलभागित्वं स्वसिद्धाविष्कृतम् ॥ यत्तु पुष्टिमार्गे स्वोत्प्रेक्षया दोषा
माविष्कृतास्ते तु न तत्र पदमादधते तन्मार्गस्य भगवत्कृपाविजृंभितत्वेन तत्र नरकादीनां
वक्तुमशक्यत्वात् कृपाया दुःखहरणेच्छारूपत्वात् भगवत्यचिंत्यमहिम्नि वितर्कस्यानवता-
रादत एवोक्तं—अचिंत्याः खलु ये भावाः न तांस्तर्केण योजयेत् ॥ अचिंत्यरचनारूपं मनस्यपि
जगत्खलु ॥ "नैषा तर्केण मतिरपनेया प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठे" इत्यादि "तर्काप्रतिष्ठा-
ना" दिति च ॥ एतेनात्मारामपरेत्यारभ्य सुतरां निंदित इत्यंतं निरस्तम् ॥ निंदादिकं
त्वासुरधर्मत्वात्त्वय्येवोपयुज्यत इत्युक्तमसकृदेव ॥ बुद्धतुल्यतापि सर्वस्य विज्ञानरूपता-
मंगीकुर्वतामेवेति ॥ इति पंचत्रिंशत्खंडखंडनाभासस्याभासत्वप्रदर्शनम् ॥ अथ स्वाभा-
विकशरीरित्यादिः षट्त्रिंशत्खंडखंडनाभासस्याभासत्वं प्रदर्श्यते ॥ स्वाभाविकं शरीरादि-
कमित्यस्य स्वादृष्टोद्भवमित्यर्थः ॥ स्वस्य भावः स्वभाव इति व्युत्पत्त्या दृष्टादीनामेव स्वभा-
वत्वात् तद्गतधर्मस्यैवान्यत्र भावपदबोध्यत्वात् ॥ तथा चेश्वरो न शरीरी शरीरोत्पादक-
धर्माधर्माभावादित्यनुमानं तत्र धर्माधर्माभावसाधनार्थं ज्ञानेच्छा प्रयत्नातिरिक्तविशेषधर्मा-
भावादिति हेतुः धर्मादीनां च विशेषधर्मापरपर्यायत्वेनाभिमतं विशेषगुणत्वमस्त्येवेति
नाप्रयोजकत्वशंकापि ॥ एवं च तदर्थाज्ञानादेवासंगत्यादिदोषोद्भावनम् ॥ (यच्च वैशे-
षिकैरीश्वरे सुखानंगीकारेपि नैयायिकैरानंदं ब्रह्मणो विद्वानिति श्रुतिबलात् तत्र सुखां-
गीकारेण स्वरूपासिद्धिश्च) इत्युक्तं तदपि न किंचित् वैशेषिकाणां मते श्रुतेः प्रामाण्यं
नास्ति नैयायिकानां मते तदस्तीति त्वदुक्तिः प्रमाणत्वेनांगीकुर्वद्भिः श्रद्धाजडैः स्वीकर्तव्यं
ननु शास्त्रविद्भिर्नहि वैशेषिका नास्तिका येन श्रुतिमनंगीकुर्युः ॥ तन्मते श्रुतेरन्य एवार्थ
इति चेन्नैयायिकानां तत्र निर्भरः किं मूलक इत्यपि वक्तव्यं देवानां प्रियेण ॥ अस्तु वा
तस्मिन्नानंदो नत्वसावानंद इत्युक्तिस्तु तेषां ब्रह्मण आनंदस्वरूपत्वं नास्तीत्यभिप्रायेण न
तु ब्रह्मण्यानंदोऽस्तीत्यत्रापि तात्पर्यम् ॥ अत एवानास्थाद्योतको वाशब्दस्तत्रोक्तः तत्सात्यं-
तथार्थाज्ञानादेवेदमुक्तम् ॥ जगत्कर्तृत्वेनैवेत्येवकारस्तु तादृशसाध्यतावच्छेदकरूपस्य
मुख्यत्वप्रतिपत्त्यर्थः । अत एव मणिकारादिभिरीश्वरानुमाने तद्रूपेण मुख्यतयानुमितिः
प्रतिपादिता । उदयनाचार्यैरपि कार्या योजनेत्यादिश्लोकेन प्रतिपादितहेतुगूढसाध्यतावच्छे-
दकावच्छिन्नविधेयकानुमितिजनकस्य कार्यत्वहेतोः प्राथम्येनोपादानं कृतम् ॥ यत्तु
(लोके दृष्टत्वेनोक्तो नियमो ध्वंसे व्यभिचारी) इत्युक्तं तदपि तन्मताज्ञानादेव ॥ तत्र
कार्यत्वहेतोर्ध्वंसे व्यभिचारवारणाय सत्वे सतीति विशेषणं यथा तैर्दत्तं तथैव प्रकृतेपि
सत्कार्यकर्तृत्वमेव तादृशनियमघटकमिति न दोषः ॥ वस्तुतस्तु ध्वंसकर्तृत्वं तु तत्प्रति-
योग्युपादानगोचरज्ञानवत्त्वमेवेति न दोषः भावत्वादिकं त्वखंडधर्म इति न खंडनोक्त-
दो ॰ र इति ध्येयम् ॥ खंडनरीत्यनुसरणे तु कर्तृत्वादेरपि निर्वक्तुमशक्यत्वेन भाव-

स्वमात्रे तत्कथनमसंगतं स्यात् ॥ यदपि कर्तृत्वस्य शरीरित्वव्याप्यत्वे मानाभावादित्युक्तं तदपि मंदम् ॥ यथा कार्यत्वस्य कर्तृजन्यत्वव्याप्यत्वे कार्यत्वेन कर्तृत्वेन कार्यकारणभाव एव मानं तथैव कृतित्वावच्छिन्नं प्रति अवच्छिन्नत्वसंबंधेन शरीरस्य हेतुत्वमिति कार्यकारणभावस्यापि वक्तुं शक्यत्वे तस्यैवानुकूलतर्कविधया मानत्वात् ॥ एवं चेश्वरस्य शरीरसिद्धिरपि स्यादेव ॥ ननु यदि कार्यत्वावच्छिन्नं प्रति चेष्टात्वेन हेतुत्वं स्यात्तदा तादृशकार्यकारणभावानुरोधेनेश्वरस्य शरीरं सिध्येत् नत्वेवमस्ति कार्यत्वावच्छिन्नंप्रति ज्ञानत्वादिनैव हेतुत्वम् ॥ ननु चेष्टात्वेनापि चेष्टाया अपि कार्यत्वेन तां प्रति चेष्टांतरहेतुतायामनवस्थापत्तेर्ज्ञानत्वेन हेतुत्वस्य तूभयवादिसंमततया तत्र दोषस्य समत्वादिति चेन्न ॥ दृष्टांते ज्ञानादीनां चेष्टासमव्याप्यत्वदर्शनेन ज्ञानत्वेन कार्यकारणभावग्रहकाले कृतित्वेनेच्छात्वेनापि स्यादेव ॥ कारणत्वग्राहकयोरन्वयसहचारज्ञानव्यतिरेकसहचारज्ञानव्यतिरेकसहचारज्ञानयोरत्राप्यवारणीयत्वात्पक्षे पक्षसमे व्यभिचारसंदेहस्याकिंचित्करत्वादन्यथा वह्नित्वावच्छिन्नस्यापि धूमं प्रति कारणत्वानुपपत्तेः ॥ गौरवं तु कार्यकारणभावग्रहोत्तरकालीनज्ञानविषयत्वादप्रतिबंधकमत एवोक्तं फलमुखगौरवस्यादोषत्वादिति ॥ तादृशस्थलेऽनवस्थाया दोषत्वोपगमे तु कार्यमात्रे दृष्टस्य कारणत्वं त्वन्मतसिद्धमनुपपन्नं स्यात् ॥ तत्राप्यदृष्टस्य कार्यत्वेन तत्प्रत्यदृष्टांतरान्वेषणेनवस्थाया दुर्वारत्वादिति संक्षेपः ॥ ज्ञानभिन्नकार्यत्वेन ज्ञानत्वेनेत्यादितदुक्तकार्यकारणभावे ज्ञानभिन्नत्वेनेत्यादिविशेषणमपि भ्रमादेव तादृशानवस्थाया अकिंचित्करत्वात् ॥ यत्तु कार्यत्वं कृतिसाध्यमिति कृतिसाध्यतासिद्धिर्निव्यत्यूहैवेत्युक्तं तदपि मंदम् ॥ कार्यत्वस्य प्रागभावप्रतियोगित्वरूपतां स्वरूपसंबंधात्मकत्वं स्वीकुर्वतां मते कृतिसाध्यत्वस्य द्व्यणुकादावसिद्धेः त्वदुक्तप्रणाल्येच्छादीनां सिद्ध्यभावात् प्रकारांतरानुसरणे तु शरीरसिद्धिरपि स्यादेव ॥ इति षड्विंशत्खंडखंडनाभासस्याभासत्वप्रदर्शनम् ॥ अथ तत्र पूर्वपक्ष इत्यादेः सप्तत्रिंशत्खंडखंडनाभासस्याभासत्वं प्रदर्श्यते ॥ पूर्वपक्षे ब्रह्मधर्माणां भिन्नत्वमभिन्नत्वं वेति विप्रतिपत्तिर्भिन्नत्वरूपे प्रथमपक्षे च तेषां नित्यत्वांगीकारे "एकमेवाद्वितीय" मित्यादिश्रुतिविरोधः ॥ तत्र च नित्यतयांगीकारस्यैव प्रयोजकत्वं अनित्यत्वं यदि स्वीक्रियते तदा तेषां मिथ्यात्वादद्वैतव्याघातकत्वाभावात् ॥ भेदाभावप्रयोजकत्वोक्तिस्तु तदंगीकारस्य तद्ग्रंथसंदर्भानभिज्ञत्वद्योतिका ॥ तत्र तदंगीकारस्य भेदाभावप्रयोजकताया अनुक्तत्वात् संबंधासंभवस्तु पूर्वमेव निरस्तः ॥ यत्तु मूलावच्छेदेन तेजस्त्वेन प्रतीयमानत्वं ताद्रूप्ये हेतुरुच्यते चेन्मणिप्रभादौ व्यभिचारी मणिप्रभाया मणित्वाभावादित्युक्तं तन्मंदम् ॥ उपादानोपादेययोरभिन्नत्वं स्वीकुर्वतां वैदिकानां मते तेजोरूपमणिकार्यस्य मणितेजसोपि मणितोऽत्यंतभेदे मानाभावात् ॥ ताद्रूप्यस्य सत्वेन व्यभिचाराभावाद्ध्वंसादिवद्भेदस्यापीश्वरेच्छा प्रयुक्तत्व सत्वेन तदीयत्वव्यवहारस्यापि नानुपपत्तिः ॥ किंच सूर्यप्रभामणिप्रभादौ तत्तद्भेदास्त्वयाभ्युपगम्यंते तदाऽवयवेष्ववयविनोर्भेद एवाभ्युपेयस्तुल्यन्यायादेवं चावयवावयविनोर्भेदे द्विगुणपरिमाणत्वादयो भाष्योक्तदोषा दुर्वारा एव ॥ तद्ध्वंसादौ तदीयत्वेन प्रतीयमाने

तदुपादानत्वाभावात्तद्भेदत्वाभावाच्च न व्यभिचारः ॥ नापि दृष्टांतासिद्धिर्दृष्टांतस्य सूर्यतेजसि प्रसिद्धत्वात् ॥ दृष्टांते साध्याभावो दृष्टांतासिद्धिपदेन विवक्षितश्चेत्तदा भ्रम एव तस्य साध्यवैकल्यत्वेन प्रसिद्धस्य दृष्टांतासिद्धिपदबोध्यत्वाभावात् ॥ तस्मादेक-धर्माणां भिन्नत्वमभिन्नत्वं चोभयविधश्रुतिसिद्धत्वादुपेयम् ॥ भेदाभेदवादिमतप्रवेशस्तु यथा तव बुद्धमतप्रवेशो नास्ति तथैवास्माकमपि किंचिद्वैलक्षण्यसत्त्वान्न संभवति एक-स्याश्रुतेर्मायिकत्वबोधनेऽन्यश्रुतेस्तद्बोधकत्वस्वीकारे सगुणबोधकश्रुतीनां यथा त्वन्मते मायिकत्वबोधकत्वं तथा निर्गुणप्रतिपादकानामपि तत्कुतो न स्यात् ॥ ( एतेन भेदस्य मायिकत्वे तु भेदबोधकश्रुतीनामिवे ) त्यादिकं निरस्तम् ॥ यत्तु ( यदादित्यगतं तेज इति तूपासनार्थं स्वीयत्वेन वर्णन ) मित्याद्युक्तं तन्मंदम् ॥ आदित्यगततेजसस्तदीयत्वा-भावे तदुपासनमपि न फलदं स्यात् ॥ न चोपासनाया भ्रमस्वरूपत्वाद्भ्रमादपि फलं मवस्येवेति वाच्यम् ॥ संवादिभ्रमस्यैव त्वन्मत उपासनादृष्टांतत्वेन वर्णनादादित्यादि-तेजसो ब्रह्मसंबंधित्वाभावे तस्य प्रदीपप्रभातुल्यत्वापत्त्या न लभ्यते मणिर्दीपप्रभा-प्रत्यभिधावतेत्यादिन्यायेनादित्यतेजस उपासनान्मोक्षादिफलं न स्यात् ॥ सोमो भूत्वा रसात्मक इत्यादौ तु तत्कार्यार्थं तत्तद्रूपेणाविर्भावः प्रतिपादितः । एवं च तद्रूपेणा-विर्भूते ब्रह्मणि द्वितीयरूपस्य तिरोभावः । अत एव मत्स्यादिरूपेणाविर्भूते नृसिंहादि-रूपस्य तिरोभावान्न तत्कार्यकारित्वं तथा च मत्स्यादिरूपेणाविर्भूत ऐश्वर्यशक्तेस्तिरो-भावान्नीतत्वाद्युपपद्यत एवेति न दोषः "न तत्र सूर्यो भाती"त्यादिवाक्यस्य तु सूर्य-रूपेणाविर्भूतस्य न ब्रह्मावभासकत्वं किंतु "तस्य भासा" इत्यादिवाक्यानुरोधात्सूर्य-गततेजस एव कुत्रचिद्ब्रह्मावभासत्वमित्युक्तं प्राक् ॥ तस्मात्सूर्यादितेजसो भिन्नत्वकल्पने गौरवात्सूर्यादितेजसो भिन्नत्वोक्तिरप्रामाणिक्येवेति ॥ प्रलय इत्यादिप्रलापस्त्वसन्मता-ज्ञानमूलकत्वादुपेक्ष्यः ॥ उक्तश्चायमर्थः "प्रकाशाश्रयवद्वा तेजस्त्वा"दिति सूत्रेण व्यासैः त्वदुक्तं पूर्वमेव निरस्तत्वादुपेक्ष्यम् ॥ यत्तु ( हेतुकोटौ स्वाश्रयाभिन्नेति अभेदस्य निवेशात्त्वन्मते स्वरूपासिद्धिरभेदस्य प्रागसिद्धत्वा ) दिति तदसत् ॥ अस्मन्मत उपादानोपादेययोरभेदः सर्वत्र घटपटादौ मृदांगीकारात् सिद्ध एवेति न त्वदुक्तो दोषः ॥ किंच हेत्वसिद्धेः स्वरूपासिद्धित्वेनाभिधानं शास्त्रानभिज्ञत्वं द्योतयति हेतौ हेतुतावच्छेदकाभावे हेत्वसिद्धिर्यथा कांचनमयधूमादिति तत्र धूमरूपहेतौ कांचनमय-त्वाभावाद्धेत्वसिद्धिरेवमत्रापि तेजसि स्वाश्रयाभेदस्यासत्सिद्धस्य त्वयाऽसिद्धत्वेनारोपेण हेत्वसिद्धिकथनस्य युक्तत्वेपि स्वरूपासिद्धिकथनं त्वयुक्तमेव पक्षे हेत्वभावः स्वरूपा-सिद्धिः ॥ नच हेतौ हेतुतावच्छेदकाभावे पक्षे हेतुतावच्छिन्नहेत्वभावस्याक्षततया स्वरूपा-सिद्धिरव्याहतैवेति वाच्यम् ॥ एवं सति तुल्ययुक्त्या साध्याप्रसिध्यादेरपि बाधांतर्गततया तेषां व्याप्यत्वासिद्धिमध्येंतर्भावस्य तत्तच्छास्त्रप्रतिपादितस्यासंगत्यापत्तिर्दुर्वारैवेत्यलमम-कृतविचारेण ॥ भगवतस्तेजोरूपत्वे तु अत्रायमात्मा स्वयंज्योतिर्भवतीति श्रुतिर्मानम् ॥ नच ज्योतिःशब्देन ज्ञानमभिधीयत इति वाच्यम् ॥ शक्तिग्राहकाभावात् वेदे निर्मूल-लक्षणाया अप्रामाणिकत्वात् ॥ किंचैवं विनिगमनाविरहेणेच्छादेरपि ज्योतिस्तेज

शादिशब्दप्रतिपाद्यत्व स्यात् ॥ ज्ञानत्वात्तेषामपि विषयावभासकत्वात् ॥ किंच यदादि त्यगत तेज इत्यपि ब्रह्मधर्माणा ब्रह्मणश्च तेजस्त्वे मान तादृशवाक्यस्योपासनापरत्व यत्त्वयोक्त तत्तु पूर्वमेव खडित तादृशवाक्यस्योपासनापरत्वे तत्तेज उपासस्वेति वदेत् न तु विद्धीति ॥ अत एव रामकृष्णाद्यवतारोपक्रमे ब्रह्मादीना तेनोरूपस्यैव भगवतो दर्शन नतु ज्ञानस्वरूपस्येति तन्न पुराणादिपु वर्णितम् ॥ यदपि ( अद्वितीयपदेनैव तद्धर्मातिरिक्तवारणसभवे श्रुतावेकपदैवपदयोर्वैयर्थ्यप्रसग ) इति तन्न रोचिष्णु ॥ अद्वितीयब्रह्माभिन्नस्य तत्सदृशस्याभावबोधनेपि ब्रह्मण्येवानेकरूपेण व्यवस्थिते भेद शका स्यादत एकपदैवपदयो सार्थक्यम् ॥ किंच त्वन्मतेपि सजातीयविजातीयस्व गतभेदाभावबोधार्थं एकादिपदत्रयमुपात्त तत्र ब्रह्मण सजातीयविजातीययोरप्रसिद्ध्या तद्भेदस्याप्यप्रसिद्ध्या तदभावाप्रसिद्धेस्तद्वैयर्थ्य दुर्वारमेव ॥ न च शकानिवृत्यर्थं तदिति वाच्यम् ॥ ब्रह्मभिन्न सर्वमसदेवेति निश्चयवतस्तत्र शकाया असभवात् ॥ न च वादिशकानिवृत्यर्थं तदिति वाच्यम् ॥ माध्वादीना द्वैतवादिना तादृशशकाया निवृत्य सभवात् प्रत्युत विजातीय भिन्न ब्रह्मेति निश्चय एव वर्तते रामानुजाचार्याणा शरीर शरीरिभावमभ्युपगच्छता स्वगतभेदशकाया अनिवृत्ते ॥ एवमन्येषा नैयायिकमी मासकादीना तन्निवृत्त्या तत्सार्थक्यस्य दुरुपपादत्वात् ॥ मायापदेन कुहकमिति वदन् प्रष्टव्य किं मायाविद्याभिन्न कुहक भगवति कन स्वीकृत येन न यत्र माया किमुतापरे इत्यादिना कैमुतिकन्याय सगत स्यात् । येषु चेत्यादिना भगवद्धर्माभगवदिच्छया भगवत्कृपापात्रेषु आविर्भवति पुनरिच्छयैव तिरोभवतीति प्रतिपादित तत्रा*यधर्माणा मन्यत्र स्थितेरसभवादिति दोषापादानमसगत जीवाना भगवतोऽत्यतभिन्नत्वानभ्यु पगमात् कल्पनाया दृष्टानुसारित्व स्वीकुर्वतापि घटे पटधर्माणामदृष्टत्वे मृद्धर्मो गन्धादय ब्रह्मधर्मा सत्तादयस्तत्र कुतो वाभीक्ष्यते ॥ श्रिया पुष्ट्या गिरा कान्त्यादिवाक्ये निषेवितमित्यस्य निरतर युक्तमित्युक्त्वा निषेवितत्व च माययेति यदुक्त तदपि न सभवति मायया निरतर युक्तत्वासभवात् मायाया सातत्वस्वीकारात् ॥ किंच तद्वाक्ये मायया च निषेवितमिति वाक्यघटकनिषेवितत्वमपि माययैव वक्तव्य तत्र माययोर्भेदाभ्युपगमेन्योन्याश्रयात्तदनभ्युपगमे चात्माश्रयप्रसग इति दिक् ॥ अन्यत्सर्वं पूर्वमेव निरस्तम् ॥ इति सप्तत्रिंशत्खडखडनाभासस्याभासत्वप्रदर्शनम् ॥

अथ तत्र भगवल्लीलानित्येत्यादेरष्टत्रिंशत्खडखडनाभासस्याभासत्व प्रदर्श्यते ॥ भगवल्लीला नित्या भगवदेकनिष्ठत्वादित्यत्र तदेकनिष्ठत्वमित्यस्य तद्धर्मत्वादित्यर्थ ॥ आकाशादेर्भगवत्कार्यत्वे न भगवन्निष्ठत्वमपि तद्धर्मत्वाभावाच्च व्यभिचारोत एवैकपदमुपात्त "सत्यज्ञानानतानदमात्रैकरसमूर्तय" इति पूर्वोदाहृतवाक्येन भगवद्धर्माणा तथा विधत्वान्नित्यत्व प्रसाध्य लीलाया अप्येवविधत्वादिति वदन् तस्या अपि भगवद्धर्म त्वमानदरूपत्व व्यनक्ति आकाशादीना चानदरूपत्वरूपद्वितीयहेत्वभावादपि न दोष ॥ एतेन आकाशादेरित्यादिनोक्त सर्वमपास्त भगवदेकनिष्ठत्व समवायेन स्वरूपसबधेन वा बोध्य तेन तदेननादे श्रुतिसिद्धस्य दिगादिवृत्तित्वेपि न क्षति ॥ ...

योगिसापेक्षभगवल्लीलासु रैत्यभावकथने तु गौणत्वात् स्वरूपासिद्धिः प्रतिपादनं तु लीला-शब्दार्थानभिज्ञत्वात् भागासिद्धिरपपरिभाषानभिज्ञत्वाच्च तथाहि लीला हि स्वानदर-सास्वाद । अत एवोक्तं "लीलाकैवल्य"मिति तस्य च प्रतियोगिसापेक्षत्वेपि न प्रति-योगिनिवृत्तिरन लोकेपि राज्ञादीनां लीला न मृगयादिनिष्ठेति ॥ किंच प्रतियोगिना-मपि भगवद्रूपत्वेन लीलाया अन्यनिष्ठत्वशंकापि नावतरति "तदेजति तन्नैजतीत्यादिना प्रतिपादितानां विरुद्धधर्माणां सर्वभवनसमर्थे भगवत्यनुपपन्नत्वासंभवेन तेषां मायि-कत्वप्रतिपादनं निरर्थकमेव । पूजनादिलीलाया ब्रह्मणि देशादिनिरपेक्षाया एव संभवे तत्र प्रतियोगिसापेक्षत्वं प्रतिपादयतस्तवज्ञात एव जपतीत्यत्र स पुरोनु इत्याद्यध्याहारं कुर्वन्नुपेक्ष्यश्च । अध्याहारस्य पूर्वखण्डे तेनैव दूषितत्वात् ॥ किंच भूतत्वविवक्षया यथान्यत्र मादिप्रयोगस्तथात्रापि कुतो न कृत ॥ नच शत्रन्तद्वयस्य विशेषणत्वेनामुख्यत्वाच्च लीलानित्यत्वप्रतिपादने तस्य तात्पर्यं किंतु भगवदुत्कर्ष एवेति कथं तेन वाक्येन लीला-नित्यत्वमुच्यत इति वाच्यम् ॥ अप्राप्ते हि शास्त्रमर्थवदिति न्यायाद्भगवत्स्वरूपस्य नित्यत्वेन तदुत्कर्षस्यापि सर्वसमतत्वेन तत्प्रतिपादने वाक्यानर्थक्यापत्त्या "सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्ये बाधे" इति न्यायादुक्तविशेषणी-भूताया लीलाया एव नित्यत्वं प्रतिपाद्यते ॥ तस्यानित्यत्वस्य सर्वबाधसमत्वात् तत्त-ल्लीलासम्बन्धिनां तेषां नित्यत्वाल्लीलाया अपि तच्चित्प्रत्यूहमेव तत्तत्पुराणवाक्याल्लीलानां नित्यत्वे बाधकाभावात् ॥ नच "वर्तमानसामीप्ये वर्तमानवद्वे"त्यनुशासनाल्लटो भूतार्थ-वाचकत्वस्यापि संभवाल्लीलानित्यत्वं न संभवतीति वाच्यम् ॥ तदनित्यत्वाभ्युपगमे तत्प्र-योगकालसमीपकालिकत्वस्याप्यभावाल्लटोऽनुपपत्तिः स्यात् ॥ किं चान्यैरपि वाक्यैर्लीलानां नित्यत्वावगमा-त्त्वेन तत्प्रयोगस्यासाधुत्वं च स्यात् ॥ तस्मादासुरमुक्त्युक्त्यै संभवति गौणप्रयोगस्यान्याय्यत्वात् तादृशप्रयोगो युक्त एव ॥ तस्मादासुरभक्त-तिप्रयुक्त एवायं प्रलाप इत्यवधेयम् ॥ यत्तु ( एवमेव क्रियाप्रबन्धस्याविच्छेदेन सदा ददातीत्यादिवल्लडि ) इत्युक्तं तदिष्टमेव यथा तत्र वर्तमानकाल एव प्रयोगस्तथात्रापि श्रीशुकवाक्योच्चारणकाले तासां वर्तमानत्वस्वीकारे नित्यत्वं गले पादुकान्यायेन सिद्ध-त्येव भूतकाले तथा प्रयोगस्तु न संभवति क्रियाप्रबन्धस्य विच्छेदेन वर्तमानत्वासंभ-वात् ॥ किंच लटो वर्तमानत्वाविवक्षाप्रयासो लीलाया नित्यत्वे श्रुत्या बाधादित्यादि-प्रलापश्च व्याससूत्रार्थानभिज्ञत्वं द्योतयति ॥ व्यासेस्तृतीयाध्याये "व्याप्तेश्च समञ्जस-सर्वाभेदादन्यत्रेम" इत्यादिसूत्रैर्लीलायास्तत्संबन्धिपदार्थानां च नित्यत्वं प्रतिपादितम् ॥ तथा हि ब्रह्मधर्माणां बाल्यपौगण्डादीनामेकस्मिन् विग्रहे न्यूनाधिकभावस्यावश्यकत्वेन सच्चिदानन्दरूपत्वमनुपपन्नमत आह "व्याप्तेश्चे"ति सर्वत पाणिपादान्तमिति श्रुत्या साकारस्यैव व्यापकत्वं तथा च पूर्वोक्तदोषस्तदा स्याद्यदि विग्रहस्य प्राकृतत्वं तस्मिन्न्यू-नाधिकपरिमाणत्वं च कालोपाधिजन्यं स्यात् ॥ तत्तु नास्ति किंत्वावरणापसारण आकाशस्येव सच्चिदानन्दरूपस्य व्यापकस्य विग्रहस्यावरणभूताया योगमायाया क्रमादप-सारणे भक्तानां तल्लीलारसानुभवेच्छया कृपया तादृशपरिमाणकं प्रकटीकरोतीति ॥

भगवतो योगमायावरणं गीतायामुक्तं—नाहं प्रकाशः सर्वस्य योगमायासमावृतः ॥ मूढोयं नाभिजानाति लोको मामजमव्ययमिति । तथा चोपास्यरूपेषु प्रतीयमानानामेव बाल्यपौगंडादिधर्माणां तल्लीलानां चावरणतदंगजन्यप्रतीतिविषयत्वेनोपपत्तौ नासमंजस्यमिति सूत्रार्थः ॥ नन्वनुच्छित्तिधर्मा इत्यादिवाक्याद्ब्रह्मधर्माणामनुच्छेदश्रावणाद्बाल्यादयोपि ब्रह्मधर्मत्वान्नित्या वाच्यास्ते च लीलानां तत्तद्भक्तानुभवार्थतया तत्क्रीडोपयोगिभक्तविशिष्टास्तत्र कृष्णोपनिषद्येकभक्तस्य पौर्वापर्येणानेकलीलासंबंधो—यो नंदः परमानंदो यशोदा मुक्तिगेहिनी । इत्यादिना—सोवतीर्णो महीतले । वने वृंदावने क्रीडन् गोपगोपीसुरैः सह । इति तैः सह क्रीडाकथनाल्लीलासंबंधित्वेनोक्तभक्तस्यापि नित्यत्वं वाच्यम् ॥ एवं च पूर्वलीलातत्संबंधिभक्तयोर्नित्यत्वे सति तस्यैवापूर्वलीलावैशिष्ट्यस्यापि नित्यत्वे सति तस्यैवाग्रिमलीलासंबंधोऽशक्यवचनः तस्यैवाग्रिमलीलासंबंधवचने त्वेकस्य युगपद्विरुद्धलीलाद्वयानुभवस्याशक्यवचनतयाग्रिमलीलानुरोधेन पूर्वलीलानित्यत्वे चैकस्य युगपदनेकलीलानित्यत्वं भज्येत पूर्वनित्यत्वे चैकस्य युगपदनेकलीलासंबंधस्याभावादग्रिमलीलासंबंधिनो भक्तस्य पूर्वलीलानुभवितुः सकाशाद्भिन्नत्वं स्यात् । तच्च भिन्नत्वं लीलानुभवितृभक्तैक्यावेदकप्रमाणभूतया कृष्णोपनिषत्स्थश्रुतिस्तद्विरुद्धम् ॥ लीलानित्यत्वे भक्तश्रुतिविरोधो भक्ताभेदे च लीलानित्यत्वभंगादनुच्छित्तिधर्मश्रुतिविरोध इत्युभयतः पाशा रज्जुरित्याशंकायामाह "सर्वाभेदादन्यत्रेमे" लीलामध्यपातिनां सर्वेषां पदार्थानां ब्रह्मणा सहाभेदाद्ब्रह्मणश्चैक्यात्पूर्वलीलातोन्यत्रोत्तरलीलायामपि मे पूर्वलीलासंबंधिन एवेत्यर्थः ॥ "रसो वै स" इत्यादिश्रुत्या सर्वरस इत्यादिश्रुत्या च सर्वरसात्मकत्वं ब्रह्मणो निर्णीतं तथा च यस्य रसस्य ये विभावानुभवादिरूपास्तैः स रसः संपद्यते ॥ आतानवितानात्मकतंतुभिः पट इवातस्तत्तादात्म्यं परस्येति तस्माल्लीलासहितं भगवतो नित्यत्वं व्यासाभिमतमज्ञात्वैवायं प्रलापः । एतद्विस्तरतो भाष्यप्रकाशादिषु निरूपितमधिकजिज्ञासुभिस्ततोवगंतव्यम् ॥ यत्तु ( वर्तमानसामीप्य इत्यस्य गौणप्रयोगबोधकत्वमित्युक्तं प्रमाणाभावा ) दित्युक्तं तन्मंदं महाभाष्यविरोधात् स्थानिवत्सूत्रे भाष्ये "गुरुवद्गुरुपुत्रे वर्तितव्यमिति गुरुवद्गुरुपुत्रोपि यथा आसनादिकं लभत एवमिहापि स्थानिकार्यमादेशेतिदिश्यत" इत्युक्त्वा "नैतदस्ति प्रयोजनं लोकत एतत्सिद्ध" मित्युक्तं तथा च लोके तत्सदृशे तद्व्यवहारो न मुख्यः किंतु गौण एव यत्रातिदेशिको व्यवहारो मुख्यः स्यात्तदायमपि मुख्यः स्यादेव नचैतदस्ति वाहीके गोव्यवहारस्य मुख्यत्वप्रसंगात् । एवमतिदेशांतरेष्वपि बोध्यम् ॥ एतेन अतिदेशांतरेष्वतिप्रसगादित्यादिकं निरस्तम् ॥ इत्यष्टात्रिंशत्खंडखंडनाभासस्याभासत्वप्रदर्शनम् ॥ अथ तत्र गर्गोक्तिगतेत्यादेरेकोनचत्वारिंशत्खंडखंडनाभासस्याभासत्वं प्रदर्श्यते ॥ दशमस्कंधस्थगर्गाचार्यवाक्यगतसंतिपदेन लीलोपयोगिभगवन्नामरूपयोर्नित्यत्वं बोध्यते तत्र संतिपदमध्याहारादिप्रकारसमूहेन योज्यमिति वदता तत्प्रकारं चादर्शयता तत्प्रकारानभिज्ञत्वमाविष्कृतम् ॥ किंचाध्याहारः क्रियायाः कारकस्य वा भवति क्रियां विना कारकस्य कारकं विना

क्रियाया बोधकत्वाभावात् यथा द्वारमित्युक्ते पिधेहीत्यस्याध्याहारः । पिधेहीत्युक्ते द्वारमित्यस्याध्याहारः । अत्र तु क्रियाकारकयोर्नामसत्तारूपयोस्तत्पदेनोक्तत्वात्कस्याध्याहार इत्यपि विचारणीयं बुद्धिमद्भिः ॥ तस्मादध्याहारोऽसंगत एव ॥ यत्तु तस्मिन्नेव वाक्ये अनुरूपाणीत्यस्य रूपस्य योग्यानीति विग्रहं कृत्वा रूपं वस्तुमात्रपरिचायकमित्युच्यते तदप्यज्ञानात् ॥ रूपस्य वस्तुमात्रपरिचायकत्वे गुणकर्मपदयोर्वैयर्थ्यापत्तिस्तयोरपि तदन्तर्गतत्वात् ॥ किंचानन्वितार्थत्वं च तादृशवाक्यस्य स्यात् नहि रूपपदार्थे वस्तुमात्रे गुणकर्मपदार्थस्याभेदेनान्वय इति वक्तुं शक्यते समासाघटकपदसापेक्षत्वादसामर्थ्यं स्यात् ॥ अत एव समर्थः पदविधिरिति सूत्रभाष्ये सापेक्षमसमर्थवद्भवतीत्युक्तम् ॥ किंच योग्यमात्र एवानुरूपपदस्य शक्तिरित्येतावतैव सामंजस्ये तादृशविग्रहप्रदर्शनं व्यर्थमेव ॥ किंच योग्यस्य बाधशून्यत्वार्थकत्वमुक्त्वा स्वार्थगुणकर्मांशशून्यानीत्यर्थप्रदर्शनमप्यसंगतं गुणकर्मांशशून्यानीत्यर्थस्यैव तादृशप्रणाल्या स्वार्थगुणकर्मांशशून्यानीत्यर्थस्य शब्दादलाभात् लक्षणाश्रयणे तु गौरवं स्यात् ॥ एवं च स्वोक्तौ गौरवान्वयाभावरूपान् दोषानदृष्ट्वा परपक्षे दोषमुद्भावयन्नुपेक्ष्यः ॥ तथा च तत्समये तद्योग्याकारक्रियादिमत्त्वमेवानुरूपत्वं योग्यत्वं च बाधाभाव इति न त्वदुक्तात्माश्रयशंकापि ॥ यदपि यत्त्वत्रेत्यादिना टीकाकृदुक्तं किंचिदनूद्य तन्न संगतमित्युक्त्वा तथाहीत्यादिना जैमिनिमतत्वजातिशक्तिज्ञानस्यैव च पदार्थशक्तिद्वारा विशिष्टशाब्दहेतुत्वमिति न लक्षणादोषावसर इत्याद्युक्तं तदपि न साधीयः शाब्दबोधे वृत्तिज्ञानजन्यपदार्थोपस्थितेरतिप्रसंगभंगाय हेतुत्वं वाच्यं तथा च व्यक्तौ शक्त्यस्वीकारे वृत्तिज्ञानजन्यव्यक्त्युपस्थितेरभावात्तच्छाब्दबोधानुपपत्तिः ॥ किंच जातौ शक्तिस्वीकारे गौर्नष्टो गौरुत्पन्न इत्यत्र गोत्वे नाशप्रतियोगित्वोत्पत्त्यादेर्बाधितत्वादनन्वयापत्तिस्तस्माज्जातौ शक्तिर्व्यक्तौ लक्षणेति मंडनमिश्रप्रतिपादितं जैमिनिमतमेवादरणीयं तथा च जातेरिव व्यक्तेरपि वृत्तिज्ञानजन्योपस्थितेः सत्त्वान्नानुपपत्तिरत एवोक्तं तैः–जातेरस्तित्वनास्तित्वे नहि कश्चिद्विवक्षति ॥ नित्यत्वाल्लक्ष्यमाणाया व्यक्तेस्ते हि विशेषणे । इति तथा च कथं न लक्षणादोष इति वक्तव्यं न च तद्धर्माश्रयविषयकशाब्दबोधे तद्धर्मशक्तिज्ञानत्वेन हेतुत्वं स्वीक्रियत इति न तद्धर्माश्रयशक्तिज्ञानापेक्षेति वाच्यम् ॥ निर्धर्मितावच्छेदकशक्तिज्ञानस्य हेतुत्वासंभवेन तदर्थं गोत्वादिजातिनिष्ठशक्तिज्ञानस्य गोत्वत्वादिधर्मितावच्छेदकत्वस्यावश्यं वक्तव्यतया गौरवात्तदपेक्षया गोत्वविशिष्टधर्मिकशक्तिज्ञानस्यैव हेतुत्वे लाघवाद्व्यक्तिशक्तिमत्तमेव साधीय इत्यन्यत्र विस्तरः ॥ एवं च जैमिनिमतस्य दोषग्रस्तत्वाद्व्यासस्य न तत्र निर्भरः किंतु व्यक्तिशक्तिवाद एव ॥ यत्तु व्यक्तिशक्तावनन्तगौरवमित्यूचे तत्र स प्रष्टव्यः किं गौरवं व्यक्तीनामानन्त्यात् कारणतावच्छेदककोटौ धर्मधर्मिणोः प्रवेशाद्वा नाद्यः । गोत्वाश्रयविषयकशाब्दबुद्धौ गोत्वप्रकारकयत्किंचिद्गोविषयकशक्तिज्ञानस्य हेतुत्वात्सकलगोविशेष्यकशक्तिज्ञानस्याहेतुत्वाच्च नापि द्वितीयस्त्वन्मतेपि धर्मितावच्छेदकविधया गोत्वत्वप्रवेशप्रयुक्तगौरवस्य पूर्वमेवोक्तत्वात् "शब्द इति चेन्नातः प्रभावा"दिति सूत्रात्तथा-

ऽप्रतीतेरिति वदन् सूत्रार्थानभिज्ञत्वं द्योतयति सूत्रदेवताद्दशशङ्केर्लाभात् तथा हि पूर्वसूत्रे देवानां कर्माधिकार उक्तः तत्रेयमाशङ्का जायते कर्मकरणे विरोधो मास्तु तथापि शब्दे विरोधो भविष्यति । श्रुतौ "साध्या वै देवाः स्वर्गकामा एते षड्रात्रमपश्यंस्तमाहरंस्तेनायजंत सोमिष्टोमेन वसूनयाजयत् स उक्थेन रुद्रानयाजय" दित्यादिना देवानां कर्माधिकार उक्तः । साध्यरुद्रवसूनां यागकर्तृत्वबोधनात् तत्र यागानां चाध्ययनविधिप्रतिपाद्यवेदाध्ययनसाध्यत्वाद्वेदजन्यज्ञानस्य साध्याख्यदेवसाध्ययागरूपविषयसापेक्षत्वात्तत्कर्तृणां च साध्याख्यदेवानां तु यागार्थं प्रवृत्तत्वेन वाक्यार्थप्रमितिसमये तस्य विषयाभावेनोत्पत्तौ ज्ञप्तौ चात्माश्रयप्रसंगे ज्ञाने कर्मकर्तृविरोधः ॥ न च ते साध्याख्या देवाः सा यागव्यक्तिश्च भिन्नेवेति वाच्यम् ॥ अनवस्थाप्रसंगात् ॥ तथा च देवानां कर्माधिकारेंगीक्रियमाण एवं विरोध इति शंकाशब्द इति चेदिति सूत्रभागेनोक्त्वा तां नेत्यनेन निरस्यति तत्र हेतुमाह अतः प्रभवादिति । प्रकर्षेण भवः प्रभवस्तस्मात् अतः शब्दतः प्रकर्षेण भवस्तु विद्यमानता तथा च वेदोक्तपदार्थानां वेदत एव नित्यत्वावधारणान्न पूर्वोक्तविरोध इत्यर्थः । तस्मान्नामप्रपंचो वेदात्मको, भिन्न एव अनुकारिणः सकाशादनुकार्यस्य भिन्नत्वाद्वेदोक्तपदार्था अनुकार्या अन्ये अनुकारिणः तस्य च वेदैकवेद्यत्वं न लौकिकप्रमाणविषयत्वं तथा च साध्यादिभेदे वेदादवगम्यमानस्य प्रपंचस्य भिन्नत्वात्तेनैव सह पदपदार्थानां संबंधान्न ज्ञाने कर्मकर्तृविरोधो न वा वेदानित्यत्वं भूतभाविव्यवहारकालेपि तस्य सत्वादन्यथा भूतत्वभावित्वयोर्निराश्रयत्वप्रसंगात् । धर्मत्वमपि तयोर्न स्यात् तस्मान्न विरोध इत्यर्थः ॥ कथमवगम्यत अत आह "सूत्रे प्रत्यक्षानुमानाभ्या" मिति प्रत्यक्षं तावदिदानीमपि यजमाने यजमानकृत्यं ऋत्विजश्च ऋत्विक्कृत्यं वेदादेव वृद्धव्यवहारादिनैवावगच्छंति । एवं च यथा कर्म वेदैकगम्यं तथा पदार्था अपि ॥ ननु पदपदार्थसंबंधस्य नित्यत्वार्थमतिरिक्तप्रपंचस्वीकारोऽनर्थको जैमिनीयोक्तरीत्या आकृतिवाचित्वेनापि तत्सिद्धेः न च व्यक्तिप्रतीत्युनुपपत्तिराक्षेपादेव तत्सिद्धेरिति चेन्नैवम् ॥ आक्षेपपदार्थस्य दोषग्रस्तत्वात् तत्राक्षेपपदे नानुमानमुच्यतेऽर्थापत्तिर्वा नाद्यः शब्दस्यानुमानविधया बोधकत्वेऽप्रमाणांतरत्वप्रसंगात् न द्वितीयः सर्वत्र लक्षणायां गौरवप्रसंगात् ॥ किंच "सिक्तरेता स्यात् प्रथमाया तस्य जिह्यामुपदध्या" दिति श्रुतौ सिक्तरेत.पदस्य लक्षणया निर्वाहासंभवः न हि तद्वाच्या आकृतिः काचित्संभवति या व्यक्तिं सिक्तरेतसं वाक्षिपेत् ॥ किंतु सिक्तरेतस्त्वं तत्रोपाधिः स च रेतःसेकानंतरभावित्वादनित्यस्तत्र पदसंबंधांगीकारे शब्दानित्यत्वापरिहारादोषतादवस्थ्यमित्यतो जैमिनिमतं साधु ॥ ननु वैदिकसृष्टेरतिरिक्तत्वांगीकारे तस्या अगोचरत्वे नानुपस्थितत्वात्तत्र संकेतग्रहो दुर्लभ इति चेन्न वैदिकसृष्टेर्भगवद्भिन्नत्वात् पूर्वेषां ब्रह्मादीनां भगवद्दर्शनेनोपस्थितिस्तत्रोऽर्वाचीनानामिदानींतनपर्यंतानां तु संप्रदायपारंपर्यात्सर्वस्य भगवदनुकारित्वेन लौकिकसदृशतयोपमानेन संकेतग्रहसौकर्यादद्दोषोधिकं तु भाष्ये प्रतिपादितम् ॥ स्वरुकृतीयार्थकरणे तु समाननामरूपत्वादित्युत्तरसूत्रस्यानल्पनावश्यकतापत्तेः ॥ आकृत्या शब्दस्य संबंधस्वीकारे आकृतेर्नित्यतया प्रल-

.दौ शब्दार्थयोरनित्यसंबंधशंकाया अनुत्थानात् ननु भवन्मतेपि वैदिकशब्दैर्नित्यतया
शब्दार्थसंबंधे तादृशशंकाया अभावात् कथं सूत्रारम्भकत्वमिति चेच्छृणु "तत्तेजोऽसृज"
दित्यादिना सृष्टेरनित्यत्वं प्रतिपादितं तद्वाचकशब्देन तस्य संबंधो नित्य एव वक्तव्य
इति कथं शब्दार्थसंबंधस्य नित्यतेत्यर्थबलविचारेण शंकायामाह "समाननामरूपत्वाद्वा-
वृत्तावप्यविरोधो दर्शनात् स्मृतेश्चेति" नामरूपयोस्तुल्यत्वाल्लोकयुक्त्यनुसारेण प्रलये
तिरोभावेपि समुद्रे जलप्रक्षेपवत्पुनरुपादाने तदेवेति निश्चयाभावेपि नामरूपयोस्तुल्य-
त्वादन्यस्य भेदकस्याभावाद्वानित्यसंयोगः ॥ किंत्वनित्यतया प्रतीयमानः ॥ अत एवोक्तं
विष्णुपुराणे—तदेतदक्षयं नित्यं जगन्मुनिवराखिलम् ॥ आविर्भावतिरोभावजन्मनाश-
विकल्पवदिति तथा च तादृशश्रुतीनामाविर्भावबोधकत्वमेव न तेनानित्यत्वमिति तात्पर्यं
वृत्त एतद्दर्शनात् दृश्यते हि वेदे सूर्यपितृमातृस्त्रीभर्तृशरीरगंगाप्रवाहादिषु तदेवेदमिति
व्यवहारः स्मृतेश्चावगम्यते-सर्वमेतदमयेनेदमात्मना चात्मयोनिना ॥ प्रजाः सृज यथापूर्वं
याश्च मय्यनुशेरते ॥ इत्यादिरूपया गम्यते "सूर्याचंद्रमसौ धाता यथा पूर्वमकल्प-
य"दिति श्रुतिबलविचारेणापि न शंका संभवतीति यत्तु समाननामरूपत्वादिति सूत्रं
जगतोऽनित्यत्वं प्रतिपादयतीति तदसंगतं "अत एव च नित्यत्व"मिति पूर्वसूत्रा-
संगतेः तेन सूत्रेण वेदस्य नित्यत्वब्रह्मतुल्यत्वयोः प्रतिपादनाद्वैदिकसृष्टेरपि नित्यत्वम-
तिपादनाच्च ॥ अनुकृत्यधिकरणे च सर्वस्य भगवदनुकारितायाः सिद्धत्वेनानुकार्यायाः
सृष्टेरपि भगवद्रूपेण नित्यत्वात् ॥ नन्वनुकृतेस्तस्येत्यधिकरणेन न सृष्टेर्भगवदनुकारित्वं
प्रतिपादितं किंतु तस्यायमर्थः—अनु पश्चात्कृतेर्व्यापारात् "न तत्र सूर्यो भाती" त्यादौ
भात्र आत्मा प्राह्यो न तु तेजो धातुः "तमेव भांतमनुभाती"त्यादिना सर्वस्य
तत्प्रकाशाधीनप्रकाशतोक्तेति तस्य चेत्यस्य तस्य भासेति श्रुतिशेषोदाहरणार्थत्वादिति
चेन्न तादृशसूत्रात्तादृशार्थालाभाद्धेर्योगापहारित्वेनानुकरणरूपं समुदायार्थं त्यक्त्वा
तत्पदात्केवलावयवार्थस्य पश्चाद्व्यापाररूपस्य भाने मानाभावादत एव "रथंतरमुत्तर-
योर्गायती"त्यादावुत्तरग्रंथ एव तद्गेयं न तूत्तरासु ऋक्षु सत्ताशब्दानामनपेक्ष्य प्रवृ-
त्तत्वेन बलवत्त्वादित्युक्तं पूर्वतंत्रे किंतु "दहर उत्तरेभ्य"इति पूर्वसूत्रविषयवाक्ये यस्मिन्
द्यौरित्यादिरूपे सूर्यादीनां ब्रह्माधारत्वं प्रतिपादितमेतद्वाक्ये च भानं निषिध्यत इति
सदेह इदं सूत्रं प्रवर्तते न च भाननिषेधमात्रात्कथं सदेह इति शंक्यं यत्र यत्सर्वदा
तिष्ठेत्तत्र यदि न भासेत तदा तदा क भासेतेति कथं न सदेहः स्यात् तत्र ताद-
शसंदेहनिवृत्यर्थमुच्यते "अनुकृतेस्तस्य चे"ति भगवदनुकारार्थमेवैतद्वचनं सर्वोपि
पदार्थस्तमेवानुकरोति सूर्यं रश्मय इव छायापुरुषमिव तस्य भासा सर्वमिदं विभातीति
सूर्यादीनां स्वतः प्रकाशो नास्त्येव एवं च अस्याः श्रुतेः सूर्यादीनामभानेन तात्पर्यम् ।
किंतु—राजा यत्र न गण्यते मशकानां तु का कथेति वत् । अत एवोक्तं तस्य भासेति
तमेव भांतमनुभातीति इदमप्यनुकारित्वबोधनमेव न तु व्यापारः किंचानुपश्चा-
द्व्यापार इत्यस्य ब्रह्मव्यापारात्पश्चाद्व्यापार इत्यर्थोभिप्रेतोथ ब्रह्मण एव पश्चाद्व्यापारः नाद्यः
ब्रह्मणि सर्वव्यापारशून्ये व्यापारस्य त्वन्मतेऽभावेन तादृशार्थासंभवात् न द्वितीयः

न तत्र सूर्यो भातीत्यादौ प्राज्ञ आत्मा ग्राह्यो न तु तेजोधातुरित्यादित्वत्प्रतिज्ञातार्थासाधकत्वात् नहि पश्चाद्व्यापारमात्रेण भानस्य निषेधः संभवति वायुतः पश्चाद्भाविनोपि तेजसस्तत्प्रकाशकत्वात् ॥ न च तेजसः पश्चाद्भावित्वं तत्प्रकाशकत्वहानिकरमिति वाच्यम् ॥ पूर्णिमायां चंद्रोत्तरभाविनापि सूर्येण तत्प्रकाशसंभवाद्व्यभिचारापत्तेः ॥ किंच तमेव भांतमनुभातीत्यादिना तत्प्रकाशाधीनप्रकाशकतया सर्वस्योक्तत्वादिति त्वदुक्तिविरोधः तादृशश्रुतितोनुव्यापारस्यालाभादिति तस्मादनुकरणमेवानुकृतिर्भावसाधनः ॥ नच तेज एव व्यापारपदेन विवक्षितमिति वाच्यम् ॥ कृतेर्यत्नार्थकत्वे तस्यापि व्यापारे लक्षणैव वाच्या तथा च लक्ष्यार्थस्य पुनर्लक्षणया बोधकत्वे मानाभावान्न तादृशार्थबोधः यदपि यरित्यादिना सूर्यादीनां प्रकाशो नास्त्येवेत्याद्युक्त्वा तद्वेयं भगवत्प्रकाशस्य भूतसाधारण्याभावादित्युच्यते तदपि न किंचित् भगवत्प्रकाशस्य भूतसाधारण्य उपदानोपादेयभावस्यैव नियामकत्वात् यथा मृदुपादानके घटे गंधादयो मृद एव एवंभूतेष्वपि प्रकाशकत्वादयो गुणास्तदुपादानस्य भगवत एव अन्यथा घटादिषु सत्तापि त्वन्मते तेषामेव स्यात् ब्रह्मसत्ताया घटादिसाधारण्याभावस्यास्माभिर्वक्तुं शक्यत्वात् यदि चोपादानव्यतिरिक्तायामुपादेयसत्तायां मानाभावाद् घटादिषु ब्रह्मणः सत्तैव प्रतीयत इति चेत्तदा सूर्यादिपूपादानप्रकाशातिरिक्तप्रकाशकल्पने कथमाग्रह इति वक्तव्यं देवानां प्रियेण ॥ अत एव यदादित्यगतं तेज इत्यादि भगवद्वचनमपि संगच्छते त्वदुक्तरीत्या तु तदसंगतिः स्यादेव ॥ यत्तु ( विदेः प्रयोगोक्तिर्न तु दृशेस्तथा च ज्ञानस्योपासनारूपत्वेन वस्तुसिद्धिरपि दुर्घटेति—नाविदं यज्ञसंभारान्पुरुषावयवाहते । इति भागवतवचनानुसारेणापि न तेषां नित्यत्वसिद्धि )रिति प्रलपितं तत्स्वमतग्रंथानवलोकनविजृंभितं त्वन्मतानुसारिभिर्ज्ञानोपासनयोर्भेदप्रतिपादनादत एवोक्तं विद्यारण्यैर्ध्यानदीपे बोधोपास्त्योर्विशेषः क इति चेदुच्यते शृणु—वस्तुतंत्रो भवेद्बोधः कर्तृतंत्रमुपासनमिति तथा च बोधस्य वस्तुतंत्रत्वात्कथं न तेन वस्तुसिद्धिः अत एव तदग्रे—सकृत्प्रत्यक्षमात्रेण घटश्चेद्भासते तदा ॥ स्वप्रकाशोयमात्मा किं घटवच्च न भासते ॥ इत्यप्युक्तं तस्माद्विदेः प्रयोगेण बोधस्योपासनारूपतां वदन् स्वमतानभिज्ञत्वादुपेक्षणीय एव ॥ शब्द इति चेदिति सूत्रे तु यत्तेनोक्तं तत्पूर्वमेव निरस्तम् ॥ पाचकादिप्रयोगे छत्रिणो यांतीत्यादिसादृश्यं तु एकदेशवृत्तित्वेन यथा लक्षणा तथैककालवृत्तित्वेनापीत्यभिप्रायेण उपचारस्तु लक्षणयोभयत्र तुल्यः ॥ एतेन कर्मणो भूतेतीत्यादिकमपास्तम् ॥ छत्रिण इतरेषां कदाचिदपि छत्रसंबंधाभावादित्याद्युक्तिरपि सा छत्रिणो यांतीत्यादिटीकाकृदुक्त्यनवबोधात् तेनेतरेषां संबंधो न प्रतिपादितो येन तस्य तदभावापादनमनिष्टं स्यात्किंतु क्वाचित्कत्वं छत्रसंबंधस्योक्तं तथास्त्येवेति लक्षणा त्वेकसार्थवाहित्वेनैवेति ॥ अत्रेदं बोध्यं पाचकादिशब्दानां नौपचारिकत्वं पाककर्तृत्वस्य तस्मिन्विद्यमानत्वात्कदाचित्तस्याभावेपि प्रतियोगिन्यधिकरणस्य तदभावस्य तत्रासत्त्वान्न तस्य पाचकत्वहानिकरत्वं अन्यथा कपिसंयोगिन्यपि वृक्षे तदभावसत्त्वान्न कपिसंयोगीति व्यवहारापत्तिः ॥ यद्वानवच्छिन्नविशेषणतासंबंधेन तदभाववत्त्वं तद्विरोधि पाककर्तरि न

तत्संबंधेन तद्भाव इति न दोषः ॥ एवं च यथा तेषां गौपचारिकत्वं तथा परमेश्वरनाम्नामपि औपचारिके प्रयोगे तु न नामत्वं यत्तु ( भूतकालिकगुणादिविशिष्टसंज्ञिनमादाय संज्ञित्वेन सादृश्यार्थत्वमादाय प्रातिपदिकत्वेन )त्याह तन्मंदं पाचकादिपदानां यौगिकत्वेन संज्ञात्वाभावाद्बुद्ध्या बोधकस्यैव संज्ञात्वात् । उक्तं च—रूढसंकेतवन्नाम सैव संज्ञेति कीर्त्यत इति यदा तु पाकानुकूलक्रिया तेन त्यक्ता तदा तु तस्मिन्प्रयोग औपचारिक एव तत्र शक्त्याभावस्य सत्वात् प्रकृते तु संतीति प्रयोगाद्गुणकर्मणोर्नाभाव इति गौणचारिकत्वमिति डित्थाद्यपि प्रसिद्धलोकादिकमर्थमादायैव पुरुषे प्रयुज्यत इति वदन् डित्थादिशब्दानां संज्ञात्वमजानन्नुपेक्ष्यः ॥ सादृश्यमादाय प्रवृत्तत्वे गौणत्वं स्यात् लोके नरसिंहादिनाम्नामपि पित्रादि संकेतेन तत्तदर्थबोधकत्वाद्वाचकत्वमेव ॥ न चेश्वरसंकेत एव शक्तिर्न त्वाधुनिकसंकेत इति कथं तेषां वाचकत्वं शक्तया बोधकस्यैव वाचकत्वादिति वाच्यम् ॥ द्वादशेऽहनि पिता नाम कुर्यादित्याकारकस्येश्वरसंकेतस्य तत्रापि सत्वात् तत्र हि नामपदं नामत्वसमानाधिकरणधर्मावच्छिन्नपरं पुत्रस्येति चाध्याहार्यं तदपि पुत्रत्वावच्छिन्नसमानाधिकरणधर्मावच्छिन्नपरं तथा च पुत्रत्वावच्छिन्नसमानाधिकरणधर्मावच्छिन्नविशेष्यकनामत्वसमानाधिकरणधर्मावच्छिन्नविशेषणकबोधजनकत्वप्रकारककृतिर्भवत्वित्याकारकेश्वरेच्छा तादृशवाक्याल्लभ्यते साच तत्रापि वर्तत इति ॥ कृष्णादिपदानां द्विविधत्वे गौरवापादनं त्वद्भिमेण नाम्नामनित्यत्वप्रतिपादनेन विरुद्धं तेन सर्वनाम्नामनित्यत्वस्वीकारेणैकस्यैव नाम्न उच्चारणभेदेन सहस्रविधत्वात् ॥ किंचैकस्यैव तदादिशब्दस्य त्रिविधत्वं प्रतिपादितं वैयाकरणैः समानानुपूर्वीकत्वाच्चाभेदव्यवहारोऽप्यंगीकृतोऽन्यथानिष्टं स्त्रीपुंनपुंसकादिलिंगं सत्वरजस्तमसामाधिक्यन्यूनसमभावादिरूपं स्वीकर्तॄणां तेषां मते शब्दैक्ये परस्परविरुद्धस्य लिंगत्रयस्य सिद्धिर्न स्यात् । एवं कृष्णनाम्नामपि समानानुपूर्वीकत्वादेकत्वव्यवहारः ॥ अजामिलादीनां तु तन्नामसदृशनामोच्चारणादपि सद्गतिरिति पुराणेषु भगवन्नाम्नां महिमा प्रतिपाद्यत इति न तद्विरोधः ॥ एतेन किंचेत्यादिकमपास्तम् ॥ वेदस्यानित्यत्वप्रतिपादनं तु बहुवाक्यव्याकोपादुपेक्ष्यम् । "ऋचः सामानि जज्ञिर" इत्यादि तु—स्वयंभूरेष भगवान्वेदो गीतस्त्वया पुरा ॥ ब्रह्माद्या ऋषिपर्यन्ताः स्मर्तारोऽस्य न कारकाः ॥ इत्यादिवाक्यपर्यालोचनयाऽऽविर्भावप्रतिपादकमेव ॥ यत्तु ( भगवत्स्वरूपे शरीरत्वभानस्य ग्राहकदोषप्रयुक्तत्वे देहादेः सत्यत्वादि न संगतं न हि शुक्तौ रजतत्वभानस्य तथात्वे रजतस्य सत्यत्वादि भवति ) त्युक्तं तन्न युक्तं शरीरत्वभानस्य दोषप्रयुक्तत्वेपि भगवत्स्वरूपस्य सत्यत्वे बाधकाभावात् रजतत्वभानस्य तथात्वेपि शुक्तिसत्यत्ववत् नहि भगवतः शरीरमंगीकृतमस्माभिर्येन त्वदुक्तदोषावसरः स्यात् तत्त्वेन भानं त्वासुराणामेव तेषां भगवन्माया मोहितत्वात् आरोपि तथा ज्ञानस्य सुप्रस्यादिपदग्राह्यत्वान्न विरोधोऽन्यथाशुक्तिरजतस्यासंग्रहापत्तेः । एतेन ( मत्संमतार्थके न वैधर्म्यांश्च न साम्यादिय"दित्यनेन विरोध ) इति प्रलपितमपास्तम् ॥ एवं च तत्तल्लीलाविशिष्टो भगवान्सर्वदैवास्ते । अत एव गोवर्द्धनोद्धर इति क्रियानामभ्यां स्तूयते भक्तैरनुभूयतेपि तथैव ॥ ननु भवन्मते सर्वस्यैव

जगतो नित्यत्वात्किमिति लीलाया नाम्नां च नित्यत्वप्रतिपादन आग्रहः जगन्नित्यत्व-साधकयुक्तिभिरेव तेषामपि नित्यत्वसिद्धेरिति चेच्छृणु नहि जगतो यथा नैत्यत्वं तथैव लीलाया अपि नित्यत्वं किंत्वन्यथैव जगतस्तु कारणात्मना नित्यत्वं कारणादेव तस्याविर्भावस्तस्मिन्नेव लयस्तिरोभावः न तु स्वरूपेण तस्य नित्यत्वं लीलायास्तु स्वस्व रूपेणैव नित्यत्वं मायया तस्याच्छादनं तिरोभावः मायापहारणं नामाविर्भावः यथा वस्तुनो घटादेः सत एव पटादिच्छादनेन तदपसारणेन चाप्राकट्यप्राकट्ये । अत एव भक्तैस्तत्तल्लीलाविशिष्टं रूपं ध्यायद्भिस्तादृशमेव रूपं दृश्यते यदि च तद्रूपं तदानीं न स्यात् तदोपासकस्य भ्रांतत्वं स्यात् । किंच-योन्यथा संतमात्मानमन्यथा प्रतिप-द्यत इति वाक्यान्नरकगामित्वं च स्यात् तद्रूपस्य मायिकत्वस्वीकारे भगवतो भक्तव्या-मोहकत्वं स्यादिति ॥ तस्मात्तल्लीलाविशिष्टं रूपं नित्यमेवेति मंतव्यं तत्तद्रूपाणां नित्यत्वे सति शब्दार्थसंबंधस्य नित्यतया रूपे नाम्नोऽप्यावश्यकत्वेन तत्तत्कर्मानुरूपं नामापि नित्यमेवेति तत्प्रयोगे कर्म कादाचित्कत्वकृता गौणी न संभावयितुं शक्येति ध्येयम् ॥ गोपीनां क्रीडंतं पातु गोविंदमिति बीजन्यासमसमये कथनमप्येवमेव संगच्छतेऽन्यथा तादृशनामप्रयोजकीभूताया लीलाया भावित्वात्तदसंगतिः स्यात् ॥ ननु गोविंदशब्दस्य गोलाभप्रयुक्तत्वाभावेनार्थान्तरेण विष्णौ प्रयुक्तस्य तस्य श्रीकृष्णे तदवतारत्वं कुतश्चि-ज्ज्ञातवतीनां तादृशकथनेन विरुध्यत इति चेन्नैवम् ॥ तादृशशब्दस्य गोलाभप्रयुक्त-त्वाभावे मानाभावात् । अर्थान्तरस्य चानुक्तेर्न्यूनत्वं श्रीकृष्णे विष्णुत्वज्ञाने बीजन्या-सादेरसंगत्यापत्तेश्च एतेन यद्वेत्यादिकमपि निरस्तं तथापि कल्पांतरीयलीलाकर्ताऽयमेवेति निश्चयेन तल्लीलासु विस्मयानुपपत्तिः ॥ यदपि यस्त्वित्यादिना टीकाकृदुक्तं किंचिदनूद्य तदसंगतमित्युक्त्वा लीलादेरप्युत्पत्तिनाशापत्तिरिति पूर्वपक्षे दूषणमाह तदपि न साधीयः ॥ लीलोत्पत्तिनाशासंभवस्य पूर्वमेवोक्तत्वात् सिद्धांतपक्षे तु तद्देशकालादेः शब्दः पृथिव्यामित्यस्य विशेषणम्, एवं च घटरूपदेशे तत्सामग्रीसमवधानकालोत्तरघ-टीयगंधरूपेण पुष्पादिरूपदेशे सुरभिगंधरूपेण पृथिव्यां यथाविर्भवति तथा स्वस्वरूपेण जगति वृन्दावनादिरूपदेशे तथैवाविर्भवन्तीति एतेन ( यदि तत्तद्देशे तत्तत्काल इति पृथिव्यामित्यस्य विशेषणं तदा गधहीनता क्वचित्कदाचिच्च तस्याबाध्या न च सा प्रमाण-सिद्धे ) ति तत्कथनमपास्तम् ॥ तद्गंधरूपेणाविर्भावस्योक्तत्वात् ॥ तद्गंधशून्यत्वस्य पृथि-व्यां प्रमाणसिद्धत्वात् नहि जातीकुसुमगंधो घटादिषु घटीयगंधः पटादिषु वा कस्य-चित्संमतः सामान्यतो गंधविवक्षणे तद्देशपदेन पृथिवीरूपदेशो विवक्षणीय इति नानुपपत्तिः यत्तु ( इदानींतनानां गोवर्द्धनोद्धरणविशिष्टानुभवो गंधर्वनगरानुभवव ) दित्युक्तं तन्मन्दं इदानींतनभक्तानां कृतभगवदुपासनानां तत्कृपाकटाक्षाज्जातस्य तत्स्वरूपदर्शनस्य गन्धर्वनगरतुल्यत्वे भगवदुपासनाया दोषत्वं स्यात् ॥ भ्रमस्य दोष-प्रयुक्तत्वनियमात् इष्टापत्तिरिति चेद्बाह्यत्वादुपेक्ष्योसि ॥ रूपे मायिकत्वं तु मयत्येवेत्य-वधारणपूर्वकं वदता भगवत्स्वरूपे मायिकत्वात्यंतायोगव्यवच्छेद उक्तः क्रियासंगतस्यैव-कारस्यात्यंतायोगव्यवच्छेदार्थकत्वात् यथा नीलं सरोजं भवत्येवेति तत्र सरोजे

नीलत्वात्यंताभावो नास्तीत्यर्थः । न च रक्तसरोजादिषु नीलत्वाभावसत्वात्तादृशवाक्य-
स्याप्रामाण्यापत्तिरिति वाच्यम् ॥ उद्देश्यतावच्छेदकावच्छेदेनैव विधेयान्वयस्यासति
बाधके व्युत्पन्नतया सरोजत्वावच्छेदेन नीलत्वाभावस्याविद्यमानत्वेन तादृशप्रयोगे
बाधकाभावात् ॥ एवं च यथा कस्यचित्सरोजस्य नीलत्वाभिप्रायेण तादृशप्रयोगस्तथा
सुरव्यामोहार्थं कृतरूपस्य मायिकत्वमिष्टमेव ॥ यावत्स्वरूपे मायिकत्वं तादृशवा-
क्यान्न प्रतीयेतेऽन्यथा नीलं सरोजं भवत्येवेत्यत्रापि यावत्सरोजे नीलत्वं प्रतीयते ॥
किंच यावद्रूपे मायिकत्वस्वीकारे त्वदभिप्रेतनिर्गुणस्वरूपेपि मायिकत्वं कुतो न स्यात् ॥
तथा सति शून्यवाद एव त्वयांगीकृतः स्यात् ॥ किंच यथा कुरु द्विजातिसंस्कारमित्या-
दावुपक्रमाभावस्त्वया उक्तस्तथा मायिकत्वेप्युपक्रमाभावेस्माभिरापादिते कथं मायि-
कत्वस्यापि सिद्धिः ॥ पटादिनित्यत्वाल्लीलानित्यत्वे तु यद्वैलक्षण्यं तन्निरूपितं पूर्वमेव ॥
एतेन पटादेरित्यादिकं निरस्तम् ॥ इत्येकोनचत्वारिंशत्खंडखंडनाभासस्याभासत्वं प्रदर्श्यते ॥
प्रदर्शनम् ॥ अथ तत्र तदेजतीत्यादेश्चत्वारिंशत्खंडखंडनाभासस्याभासत्वं प्रदर्श्यते ॥
(तत्र तदेजतीति श्रुतिरपाणिपाद इत्यत्रोक्तरीत्याऽध्यारोपापवादाभ्यां निष्प्रपंचपरे)
त्यादिकथनं तु ईशावास्यभाष्यार्थाज्ञानमूलकमेव ॥ तत्र भगवत्पादैरध्यारोपापवादा-
लुक्तेः ॥ अनेजदेकमिति पूर्वमंत्रेऽध्यारोपापवादस्य वक्तुमशक्यत्वात्तथाहि वस्तुन्यव-
स्त्वारोपोध्यारोपः स चानेजदिति मंत्रे न संभवति तत्र वस्तुनो यथार्थरूपप्रतिपादना-
दत एव तद्भाष्ये अनेजत् नैजत् एजृ कंपने । कंपनं चलनं स्वास्थ्यप्रच्युतिस्तद्वर्जितं सर्वं-
दैकरसमित्यर्थं इत्युक्तं एवं चैकरसत्वारोपासंभवान्न तत्राध्यारोपसंभवः । एवं मनसो
जवीय इत्यत्रापि नापवादः वस्तुविवर्तस्यावस्तुनो वस्तुमात्रत्वस्याप्रतिपादनादत एव
मंत्राणां जामिताऽस्तीति पूर्वमंत्रोक्तमप्यर्थं पुनराहेत्युक्तं भाष्ये ॥ किंच "तदात्मानं
स्वयमकुरुत सच्च त्यच्चाभवत् निरुक्तं चानिरुक्तं च" त्यादिन्यायेन सर्वभानसमर्थे एज-
नानेजनयोरुभयोरेवोपपत्तावेकस्यौपाधिकत्वमपरस्यानौपाधिकत्वकल्पनमयुक्तमेव ॥ नायं
सर्पः किंतु रज्जुरेवेति वाक्यमेव तु नोभयसिद्धम् ॥ न तु सैव सर्पो सर्पश्चेत्यपि ॥
तथा च तादृशदृष्टांतासिद्ध्या न दार्ष्टान्तिकसिद्धिः ॥ तस्माद्येन रूपेणैजति तस्य
रूपस्य तस्यैजनस्य च नित्यत्वम् ॥ अत एव "स्वाभाविकी ज्ञानबलक्रियाचे" त्यादिना
क्रियायाः स्वाभाविकत्वमुक्तम् ॥ अत एव तच्छब्दस्य पुनः पुनर्ब्रह्मवाचकस्यावृत्तिः
प्रतिपादिता ॥ नच शब्दाधिक्यमात्रेण नार्थाधिक्यसिद्धिरिति वाच्यम् ॥ घटमानय
पटं पश्येत्यादौ शब्दाधिक्यादर्थाधिक्यस्य दृष्टत्वात् ॥ एतेन शब्दतोऽलाभादित्यादिकं
निरस्तम् ॥ किंच वर्तमानत्वार्थकलट्प्रयोगादपि सदा वर्तमानत्वमेजनादेः सेत्स्यति
स्वाभाविकत्ववचनादपि नित्यत्वं स्वरूपं च स्वभावश्चेत्यमरात्स्वरूपभूतेत्यर्थः ॥ तथा
च यथा स्वरूपं नित्यं तथैव सेत्यभिप्रायः तस्मादनेकनित्यरूपकमनेकनित्यक्रियाक्रमने-
कनित्यनामकं ब्रह्मेति वेदतात्पर्यम् ॥ तत्तात्पर्यमबुध्वैव त्वादृशा भ्रांताः ॥ उक्तं च-
श्रुतितात्पर्यमखिलमबुद्ध्वा भ्राम्यते जडः ॥ विवेकी त्वखिलं बुद्ध्वा तिष्ठत्यानंदवारिधौ ॥
अत एव गोकुलप्रतिपादिकायाः श्रुत्या "त्वावां वास्तुन्युष्मसिगमध्यै" इत्यादिरूपाया

अर्थान्तरं प्रकल्प्य ऋग्वेदस्य श्रुतिरप्यध्यारोपापवादपरा नेयं गोकुलपरेत्यादिको वृथा प्रलापस्तेन कृतः ॥ तद्वाचकशब्दाभावादिति हेतुः स्वरूपासिद्धः ॥ गोकुलस्य गोस्थानत्वात्तद्वाचकस्य 'यत्र गावो भूरि शृंगा अयास' इत्याकारकस्य यत्र दीर्घशृंगा गावो वसंतीत्यर्थकस्य शब्दस्य तत्र सत्त्वात् ॥ न च सत्यलोकेपि गावः संतीति तद्वाचकत्वमेवास्येति वाच्यम् ॥ स्वर्गादिष्वपि कामधेन्वादीनां सत्वेन विनिगमनाविरहप्रसंगात् ॥ किंच वेदस्य ब्रह्मप्रतिपादकत्वात्सत्यलोकप्रतिपादनेऽर्थान्तरताप्रसंगात् ॥ गोकुलस्य च गोलोकाभिन्नत्वान्नित्यत्वमेव ॥ न च तस्य नित्यत्वे मानाभाव इति वाच्यम् ॥ आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ॥ यं प्राप्य न निवर्तन्ते तद्धाम परमं ममेत्यनेन तन्नत्यलोकानां पुनरावृत्यभावप्रतिपादनेन तत्रैव स्थितेरभिप्रेतत्वेन तदनित्यत्वे तदसंगत्यापत्त्या तस्यैव प्रमाणत्वात् ॥ अत एवात्र परमं पदमवभातीत्युक्तं परमपदस्थानं वैकुंठं तस्मादप्यधिकं भाति प्रकृतिकालाद्यतीतमित्यर्थः ॥ न च परमशब्दस्योत्कृष्टवाचकत्वादितरावधिकाधिकसुखस्यैव तत्र भानापत्तिरिति वक्तव्यम् । आधिक्यस्यापि किंचित् प्रयुक्तत्वेन नित्यत्वस्यैव तत्प्रयोजकत्वसंभवे तदितरस्य कस्यचित्कल्पने मानाभावात् तन्नित्यत्वस्य च स्थाननित्यत्वप्रयुक्तत्वात् ॥ गोपीषु कामवर्धकत्ववर्णनमात्रेण विटवादित्वे व्यासशुकादीनामपि तत्त्वापत्तेः ॥ किंचासुरप्रकृतीनां तादृशार्थश्रवणेनेर्ष्यादिसंभवेन तादृशार्थस्यारमणीयत्वम् ॥ अत एवोक्तं–निजदोषावृतमनसामतिसुंदरमेव भाति विपरीतम् ॥ पश्यति पित्तोपहतः शशिशुभ्रं शंखमपि पीतम् ॥ यत्तु ( रूढ्यर्थत्यागे व्यापकत्वरूपार्थकत्वे च न मानं परिच्छिन्नैतद्ब्रह्मांडस्थत्वबोधकश्रुतिस्थात्रपदविरोधाच्चे )ति तत्तुच्छम् "यदतः परो दिवो दीप्यते हृदि हेय आत्मे"त्यादिश्रुतिविरोधस्त्वन्मतेप्येवं दुर्वार एव ॥ व्यापकस्य परत्वापरत्वानुपपत्तेः ॥ यदि च व्यापकस्याप्युपासनार्थं स्थाननिर्देशोत्र कथं विरोध इत्युच्यते तदा प्रकृतेपि कथं विरोध इति विभावनीयम् ॥ तथा च व्यापकस्य परिच्छिन्नत्वमुभयविधधर्माश्रयत्वात् विरुद्धधर्माश्रयत्वस्य ब्रह्मणि भूषणत्वात् ॥ एतेन तन्नेत्यादिकमपास्तम् ॥ परमत्वादिकं तु न नित्यत्वप्रयोजकं मानाभावादित्युक्तिस्तु हेया ॥ परमत्वस्य सर्वोत्कृष्टत्वरूपस्यानित्येकस्मिंश्चिद्वक्तुमशक्यत्वात् ॥ नित्ये प्रकृतिकालाद्यतीतत्वरूपसर्वोत्कृष्टत्वसंभवात् ननु- तावांवास्तूनीति मंत्रो माधवेनैवं व्याख्यातः–हे पत्नीयजमानौ वां युष्मदर्थं तातानि मंतव्यत्वेन प्रसिद्धानि वास्तूनि सुखनिवासयोग्यानि स्थानानि ध्याम ध्ये युवयोर्गमनायोश्मसि कामयामहे तदर्थं विष्णुं प्रार्थयामह इत्यर्थः । तानीत्युक्तानि कानीत्याह यत्र येषु वास्तुषु गावो रश्मयो भूरिशृंगा अत्यंतोन्नत्युपेता बहुभिराश्रयणीया वा अयासोऽतिविस्तृता इति न वैकुंठगोलोकादिपरत्वमस्य युक्तमिति चेन्मैवम् ॥ अस्यापि व्याख्यानस्य विष्णुस्थानबोधकत्वेन गंतव्यत्वेन प्रसिद्धस्य भवत्स्थानस्य वैकुंठाद्यतिरिक्तस्याप्रसिध्या गोलोकादिबोधकत्व एव पर्यवसानात् ॥ अत एव "अत्राहतदुरुगायस्य विष्णोः परमं पदमवभाति भूरि"त्युत्तरमंत्रस्य "अत्र खलु वास्तवाधारभूते द्युलोके उरुगायस्य बहुभिर्महात्मभिर्गातव्यस्य स्तुत्यस्य कृष्णः कामानां वर्षकस्य विष्णोरत्वादृशं पुराणादिषु गंतव्यत्वेन प्रसिद्धं परमं

निरतिशयं स्थानं भूरि प्रभूतं अवभाति स्वमहिम्ना स्फुरतीत्यर्थस्तेनैव व्याख्यातः। तथा
च तेनापि वैकुंठगोलोकादीनामेव भगवत्स्थानानां प्रतिपादनान्न विरोधः॥ त्वन्मते च
तद्व्याख्यानस्यापि विरोधः सत्यलोकोत्कृष्टस्य लोकस्य त्वया स्वीकृतत्वात्॥ ब्रह्मस्वरूपं
यत् स्थानं तच्च न गंतव्यत्वेन प्रसिद्धं सर्वव्यापकत्वात्॥ "न तस्य प्राणा उत्क्रामंति
ब्रह्मैव सन्ब्रह्माप्येती"ति श्रुतेः ब्रह्मविदो गमनाभावबोधनात्॥ किंच शृंगपदस्य
सन्निधानेन गोपदस्यापि गोवाचकत्वमेव युक्तं न रश्मिवाचकत्वं संयोगस्याभिधानि-
यामकत्वात्॥ उक्तं च–संयोगो विप्रयोगश्च साहचर्यं विरोधिता। अर्थः प्रकरणं
लिंगं वाक्यस्यान्यस्य संनिधिरित्यादि॥ अत एव सशंखचक्रो हरिरित्यादौ नेंद्रस्या-
वगतिः॥ शृंगपदस्य चोन्नतवाचकत्वे मानाभावात्। तत्र रूढेर्योगस्य चासंभवात्॥
किंच द्युलोके पत्नीयजमानयोः कर्मभिर्गंतव्यं निरतिशयं विष्णोः स्थानं पुराणेषु न
प्रसिद्धं किंतु सातिशयमेव निरतिशयं तु वरणलभ्यमेव "यमेवैष वृणुते तेन लभ्य"
इति श्रुतेः किंच नास्मिन्नेव व्याख्याने तस्य निर्भरः। अत एव द्वितीयव्याख्यानं तेनात्र
उपन्यस्तं तादृशव्याख्याने विष्णुस्थानवर्णनमविवादं तदुरुगायस्य विष्णोर्महागतेः परमं
पराध्यं स्थलमवभातीत्यस्य तत्रापि दर्शनात् तत्रापि भूरिशृंगा गावो अयासेति वाक्य-
पर्यालोचनया गोकुलरूपस्थानकल्पनस्यैव न्याय्यत्वात्॥ श्रुतत्यागेऽश्रुतकल्पने माना-
भावात्। एतेन प्रधानात्सूर्याद्विनिर्गतमित्याद्यर्थकल्पनं निरस्तम्॥ इयं व्याख्या यास्कोपि
विरुद्धत्वेन स्वकपोलकल्पितेति कथनं तु प्रमादात्॥ पूर्वोक्तयास्ककृतव्याख्यानस्य
यास्कादिविरुद्धत्वाभावात्॥ व्याख्यानांतरस्य व्याख्यानांतरादूषकत्वाच्च॥ अन्यथा
माधवभास्करानंदादिकृतवेदव्याख्यानानां परस्परं विरुद्धार्थकत्वेन माध्वरामानुजनिंबा-
र्कशंकरादिकृतसूत्रभाष्याणां च विरुद्धार्थकत्वे कपोलकल्पितत्वापत्त्या कस्याप्यर्थस्य
निश्चयानुपपत्तिः॥ तत्र व्याख्यानांतरस्येतरव्याख्यानादूषकत्वकल्पनेऽत्रापि कल्पने
दूषणानवकाशात्॥ अत एव अदो यद्दारु प्लवत इत्यस्य लक्ष्मीप्रकाशकमंत्रे पुरुषोत्तम-
पदे व्यासैर्वर्णितस्यापि तद्व्याख्यानं दूषितं कपोलकल्पितमिति वा व्यवह्रियते शब्दा-
नामनेकार्थत्वात्॥ किंच तैत्तिरीयशाखास्थोपि "ते ते धामान्युश्मसि गमध्यै यत्र गावो
भूरिशृंगा अयासः। अत्राह तदुरुगायस्य विष्णोः परमं पदमवभाति भूरी" ति मंत्रोपि
लीला तदुपयोगिपदार्थानामवभातीत्यादिवर्तमानार्थकप्रयोगानुरोधेन नित्यत्वमेव प्रति-
पादयति। अयमेवार्थ "तानि परे तथा ह्याह अविभागो वचना" दिति सूत्राभ्यां
भगवता व्यासेन निर्णीतः॥ तत्र–मन्मनस्का हि मत्प्राणा मदर्थे त्यक्तदैहिकाः॥ ये
त्यक्ता लोकधर्मांश्च मदर्थे तान्बिभर्म्यहम्॥ धारयंत्यतिकृच्छ्रेण प्रायः प्राणान् कथं-
चनेत्यादिवाक्यैर्भगवत एव जीवनहेतुत्वं परमपुरुषार्थत्वं दुःखहेतुत्वं च प्रतीयते तत्र
लोकेऽप्रसिद्धं नहि लोके दुःखहेतुत्वं जीवनहेतुत्वमानंददातृत्वं चैकस्मिन्प्रसिध्यति स्वर्गे
सुखहेतुत्वस्य नरकादिषु दुःखहेतुत्वस्य मित्रे सुखहेतुत्वस्य शत्रौ दुःखहेतुत्वस्यैव
प्रसिद्धत्वात्॥ एवं च कथमेकत्रैतत्सर्वं स्यादित्याशंकायामाह तानीत्यादि तानि पूर्वो-
क्तानि परे प्रकृतिकालाद्यतीतवैकुंठादप्युत्कृष्टे गोलोके भगवत्प्रयुक्तानि संतीत्यर्थः॥

तत्र प्रमाणं दर्शयति तथा ह्याहेति तथाह श्रुतिराह सा च श्रुतिर्ऋग्वेदेऽस्ति 'तावां वास्तून्युष्मसि गमध्यै यत्र गावो भूरि शृंगा अयासः' इत्यादिका ॥ तातानि, भगवत अनन्यभक्तसंबंधीनि वास्तूनि गमध्यै प्राप्तुं न्युष्मसि कामयामहे तानि, कुत्रेत्याकांक्षा यामाह "यत्र गावो भूरि शृंगा अयासः" तत्र च भगवत्कृतस्य गोपीषु सुखस्य दुःखस्य च प्रसिद्धत्वात् ॥ रसात्मकभगवत्कृतप्राकट्यतद्दर्शनजन्यविरहभावतज्जनित-तापमरणोपस्थितिततद्विवर्तनतदौत्कट्यप्राकट्यस्वरूपानंददानादीनां तत्तत्पुराणेषु प्रपंचितत्वात् ॥ ननु लीलाया यदि नित्यत्वं तदा तन्मध्यपातिनां तद्दर्शनं, यथा नित्यं तथा तादृक्साधनाभावेपि, निजानुकंपया कदाचित्कमपि भक्तं तत्र नयति चेत्तदा कंचित्कालं स्थापयित्वा ततस्तं वियोजयति न वेत्याशंकायामाह "अविभागो वचनात्" तत्र प्रवेशितस्य तस्माद्विभाग एव कुतः वचनात्। तैत्तिरीयके "विष्णोः कर्माणि पश्यते"त्युक्त्वा "तद्विष्णोः परमं पदं सदा पश्यंति सूरयः" पुरुषोत्तम-स्वरूपवित्सूरयो भगवद्भक्ताः, सदैव भगवत्पदं पश्यंतीत्युक्तम् ॥ अन्यथा लीलाया नित्यत्वात्पूर्वस्थितभक्तानां सदा दर्शनस्य प्राप्तत्वादिदं न वदेत् तस्मादविभाग एवेति ॥ एवं च माधवयास्कव्यासादिनां मते तौ मंत्रौ, गोकुलवर्णनपरावेव तद्व्याख्यानुसारेणापि लीलाया नित्यत्वमेवायाति ॥ तथा च, माधवयास्कादिमताश्रयणे, नापि न मिथ्यावादिमनोरथसिद्धिरिति संक्षेपः ॥ एतेन ( विरोधाभावे व्याख्यानां-तरस्यादुष्टत्वेपि सति विरोधे दुष्टत्वमेवेत्यादि ) निरस्तं विरोधाभावस्य दर्शितत्वात् ॥ यत्तु द्वितीयमंत्रे तेशब्दस्य तवेति व्याख्यानं तु व्याकरणपरिशीलनादित्यादिना-क्षेपोद्भावनं तदपि वैदिकरीत्यज्ञानाद्वेदे व्यत्ययो बहुलं छंदसी, दृष्टानुविधिरित्यादिना तादृशदोषस्य स्वयमेव पाणिनोद्धृतत्वात् ॥ द्वितीयतेशब्दस्तु, विभक्तिप्रतिरूपको-व्यय एव तस्य तानीत्यर्थः । अन्यार्थकत्वे तु विनिगमकाभावः ॥ भूरीत्यस्य तु बहुरूपस्येति इंद्रो मायाभिः पुरुरूप ईयते इत्याद्यनुरोधेन ॥ मायया बहुरूपस्येति तु व्याख्यानं न सत् ॥ अत्र मायाबोधकपदाभावात् तादृशमंत्रस्य, व्याख्या तु पूर्वखंड एवोक्ता ॥ वेदस्य नित्यत्वं तु—स्वयंभूरेष भगवान् वेदो गीतस्त्वया, पुरा ॥ अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवेत्यादिवाक्यैर्निश्चितम् ॥ तादृश-वाक्यानामर्थान्तरकल्पने वेदस्य प्रवाहरूपेण नित्यत्वकल्पने गौरवम् ॥ किंच त्वन्मतेपि अनादिनिधनेति वाक्यानुसारेण वेदेऽनादित्वं कल्पनीयं तच्च स्वजातीयध्वंसव्याप्य-प्रागभावप्रतियोगित्वरूपमेव कल्पनीयं प्रागभावाप्रतियोगित्वरूपस्य तस्य वेदे जन्यत्व-वादिनस्त्वन्मतेऽसंभवात् ॥ अस्मन्मते तु प्रागभावाप्रतियोगित्वरूपमेव सत्संभवतीत्यपि लाघवं त्वन्मते त्वनंतप्रागभावध्वंसादिकल्पनेपि गौरवं स्यात्तस्मात् त्वदुक्तरीत्या नित्यत्वं संभवतीति दिक् ॥ एतेन (वेदस्य नित्यत्वं, यादृशं प्रागस्माभिरुक्तं तादृशनि-त्यत्वेन न स्वर्दोहितसिद्धि ) रित्यादि तत् प्रलपितमपास्तम् ॥ इति चत्वारिंशत्खंडखंडं नामासत्याभासत्वप्रदर्शनम् ॥ अथ तत्र मंत्रद्वयस्येत्यादेरेकचत्वारिंशत्खंडखंडनाभा-सस्याभासत्वं प्रदर्श्यते ( तन्मंत्रद्वयस्य वामिति मंत्रादनंतरत्वोक्तिः प्रमादादेव तयो-

रेतिप्रथयहितत्वाये ) ति यदुक्तं तदज्ञानाच्छलात्। नहि तत्र तानी धामान्युश्मसीत्यनंतरं पठ्यत इत्युक्तं किंतु एतदनंतरमेव पठ्यत इति पाठोऽपि एतच्छन्दस सन्निकृष्टत्वेन बुद्धिविषयत्वात्सन्निकृष्टता तु ते ते धामान्युश्मसीति मंत्र एव तानीति मंत्रस्तु व्यवहितः ते धामानीति मन्त्रानंतरं च विष्णोः कर्माणि पश्यत इति मंत्रपाठोऽस्त्येवेति न दोषः। तथा च तादृशाभिप्रायाज्ञानादेवायमाक्षेपः। अथ यच्छन्दं तु मन्त्राभिप्रायेण प्रयुक्तस्य शब्दस्यार्थान्तरं कल्पयित्वा दूषणोद्भावनं ते ते धामान्युश्मसीति मंत्राभिप्रायेण प्रयुक्तस्य एतदनंतरमित्यस्य एतदंतस्य तानी धामानीति मंत्रपरत्वं कल्पयित्वा दोषारोपात् ननु ऋग्वेदे तादृशमंत्रयोः पौर्वापर्यं न दृष्टमिति चेन्मैवं ऋग्वेदे तद्भावेऽपि तैत्तिरीयशाखायां यजुर्वेदे तादृशक्रमस्य दर्शनात् तत्र ते ते धामान्युश्मसीति द्वितीयेऽध्याये पठ्यते तृतीये च विष्णोः कर्माणीति सदा पश्यंति सूरय इति पठितं तन्मायावादशतकव्याख्यायां निरस्तम् ॥ यत्तु ( परमब्रह्मज्ञानं भगवदैवेत्युक्तिस्तु श्रोतव्यो मंतव्य इत्यादिविरोधादुपेक्ष्ये)त्युक्तं तन्मन्दम्। भक्त्याहमेकया ग्राह्य इत्यादिवाक्यविरोधापत्तेश्च इत्यादिवाक्यस्याक्षरब्रह्मविषयत्वात् "ब्रह्मविदाप्नोति पर"मित्यादि श्रुत्या भक्तिग्राह्यता पुरुषोत्तमस्यैव श्रवणादिना स एवात्मेत्यादिवाक्ये प्रतिपादितसर्वात्मभावरूपब्रह्मज्ञानसंपत्तौ वरणे सति तत्कृपया पुरुषोत्तमज्ञानं भवतीति ॥ ( भगवद्भावयोर्भक्त्येत्यत्र तृतीया तु काशीमरणादित्यत्र पंचमीवे )त्युक्तिस्त्वज्ञानमूला काशीमरणान्मुक्तिरित्यत्र यथा पंचमीहेत्वर्थे सूत्रानुशिष्टा न तथा भक्त्यामामभिजानातीत्यत्रापि तस्याः क्रियान्वयित्वेन कारकविभक्तित्वात् ॥ तथा च दृष्टांतवैषम्यम् ॥ किंच हेतुत्वस्य अन्यजनकतावच्छेदकतापर्याप्तस्य प्रयोजकत्वरूपस्य वक्तुं शक्यत्वेऽपि करणत्वस्य न परंपरया कारणसाधारण्यम् ॥ क्रियायोगव्यवच्छिन्नकारणस्यैव करणत्वात् तस्य च फलोपधायक एव संभवादिति यदपि ( स्वर्गस्यातिदूरत्वेन दर्शनाभावस्य वक्तुं शक्यत्वेन दृष्टांतपरत्वेन व्याख्यानं न युक्त )मिति तन्मन्दम्। स्वर्गचक्षुः संयोगसत्त्वेऽपि तत्प्रत्यक्षानुदयेन तत्र यथाप्रतिबंधकाभावरूपसहकारिसमवधानाभावस्यैव हेतुत्वं कल्पनीयं एवं प्रकृतेऽपि भक्त्यादिसहकारिसमवधानाभावात् प्रत्यक्षमित्यस्य वक्तुं शक्यत्वेन दृष्टांतपरत्वेन व्याख्याने दोषाभावात् ॥ स्वर्गप्रत्यक्षे दूरत्वदोषस्य प्रतीतिप्रतिबंधकत्वादत्र तु दुरितस्यैव प्रतिबंधकत्वं भक्त्या तन्निवृत्तौ तत्रैव तद्दर्शने तत्र लौकिकमेवेन्द्रियजन्यत्वात्तदुद्भूतरूपवद्विषयत्वात् योगिनामपि सिद्धिसहकारेण दूरत्वादिदोषस्य तिरस्काराल्लौकिकमेव स्वर्गादिप्रत्यक्षं यथा काचादिसहकाराद्दश द्वादशयोजनगतस्य वस्तुनो ग्रहादीनां प्रत्यक्षमन्यथा तस्याप्यलौकिकत्वापत्तेः ॥ न चैवं योगजधर्मजप्रत्यक्षस्यालौकिकत्वं न स्यादिति वाच्यम् ॥ आकाशादिनीरूपद्रव्यप्रत्यक्षस्यैवालौकिकत्वात् लौकिकप्रत्यक्षसामग्रीसमवधाने चालौकिकत्वकल्पनस्यान्याय्यत्वात् एतेन किंच चक्षुःशब्दद्वयेनादिकं निरस्तं तादृशप्रत्यक्षस्यालौकिकत्वाभावाद्भागादिजन्यस्य प्रत्यक्षस्यैवालौकिकत्वात् तत्रैव च धर्मप्रतिकर्मक्रियया हेतुत्वात् अथवा यद्वेति पक्षद्वये दोषप्रदर्शनेऽपि परस्परविरोधेनाप्याहाररूपो दोष उद्भावितः स च समन्वेष्यति ॥

किंच दिवि स्वयप्रकाश एवेत्यादि तत्कृतव्याख्याने दिवीति शब्दस्य स्वप्रकाशार्थकत्वे स्वर्गादीनामपि स्वप्रकाशत्वापत्ति ॥ इष्टापत्तौ त्वपसिद्धातापत्तिस्त्वन्मते ब्रह्मण एव स्वप्रकाशत्वात् अत एव सजातीयप्रकाशाप्रकाश्यत्वस्वप्रतिबद्धव्यवहारे सजातीयपरानपेक्षत्वादीनि लक्षणानि प्रदीपसूर्यादिष्वतिव्याप्त्या दूषयित्वा अवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वमेव स्वप्रकाशलक्षणमादृतम् ॥ तथा च तत्र तत्पदस्य लक्षणैवादरणीया। इवशब्दस्य व्यवहितान्वयश्च ॥ किंच विष्णुपदेन शुद्ध ब्रह्म विवक्षित देवतात्मा वा नाद्य शुद्ध ब्रह्म सदा पश्यति सूरय इत्येतावतैव सामजस्ये "तद्विष्णो परम पद"मिति कथनस्य शिरोवेष्टने नासिकास्पर्शतुल्यत्वात् नापि द्वितीय वैकुठादिपुराणप्रसिद्ध तत्परम पर्द परित्यज्य शुद्धब्रह्मपर्यंतानुधावने मानाभावात् स्वकपोलकल्पितविवर्तवादमाश्रित्य दृतात्मनोधिष्ठानविधया पर ब्रह्मैव परम पदमिति विवक्षणेपि जीवमात्रस्यैव त्वन्मत शुद्धब्रह्मणि मायया कल्पितत्वेन विष्णुपर्यंतानुधावने बीजाभाव इति दिक् ॥ एव तदुपदर्शितमाधवकृतव्याख्यानेपि विष्णुसबधिपरममुत्कृष्ट पद स्वर्गस्थानमिति यदुक्त तदप्यसगत नहि शास्त्रे विष्णुस्थान स्वर्गमिति क्वापि प्रतिपादित तस्य व्यापकत्वेन तत् स्थान स्वर्गमपि भवतीति यद्युच्यते तदा भूलोकस्यापि तदायतनत्वात् स्वर्गस्यैव परमपदत्व नान्यस्येत्यत्र नियामकाभाव इति ॥ तस्माद्विष्णो परम पद वैकुठापेक्षयोत्कृष्ट गोकुलमेव गोलोकरूपत्वाद्गोलोकस्य च शास्त्रे वैकुठादुत्कृष्टत्वेन वर्णनात् ॥ तच्च सूरयो भगवद्भक्ता सदा पश्यति तेषा लीलामध्यवर्तित्वाल्लीलायाश्च नित्यत्वादिति भाव । ननु लीलाया आनदरूपत्वाद्गोकुलस्थाने तु रव्याद्यध्यादिदर्शनात् तत्रत्यवृक्षादीना छेदभेदादिदर्शनादनित्यत्वादतिप्रसक्तिरिति चेन्मैवम् ॥ नहि दर्शनमात्रेण वस्तुसिद्धिस्तथा सति पीतशख स्वल्पश्चद्रमा पर्वता भ्रमतीति पित्तदूरत्वभ्रम्यादिदूषितकरणपुरुषप्रत्यक्षेण पीतत्वस्वल्पत्वभ्रमितत्वादीनामपि सिद्ध्यापत्ति किंतु निर्दुष्टकरणदर्शनेनैव तथा चात्राविद्यादुरितादिदोषयुक्ताना तथा दर्शनेपि न गोकुलस्यानित्यत्वशका । अत एवोक्त सूरय इति भगवद्भक्ता इति तदर्थ । सूरय एव गोकुलादिस्वरूप पश्यति नान्ये । अविद्यादिनाशे भगवद्भक्तिसपत्तौ चाधुनिकानामपि तद्दर्शन भवतीत्यपि बोध्यम् ॥ एतदपि "दिवीव चक्षुराततं"मित्यादिनोक्त एतेन यद्यपि करण दोषवशाद्दूरस्थस्य तथा भान तथापि गोकुलस्थपुरुषाणा व्याध्यादिकमनुपपन्न देशातरस्थपुरुषाणा दोषसभवेपि तत्रत्यपुरुषाणा तदसभवेन स्वव्याध्यादिज्ञानानुपपत्तिरिति शकापि निरस्ता भगवदिच्छयैवाप्रकटानुभवत्वेन तद्दृष्टेरेव दोष यथैतत्तथा दशमस्कध क्षुधार्ता इदमब्रुवन्नित्यत्राक्तगोकुलस्थाना व्याध्याद्यसभवेन तद्दर्शन भगवति क्षणादिदर्शनवदासुरव्यामोहनमेव ॥ अत एव ब्रह्माडपुराणवाक्यमपि सगच्छत इत्यल विस्तरेण ॥ इत्येकचत्वारिंशत्प्रखडखडनाभासस्याभासत्वप्रदर्शनम् ॥ अथ तत्र पूर्वसिद्धित्यादद्विचत्वारिंशत्खडखडनाभासस्याभासत्व प्रदर्श्यते ॥ या पूर्वसिद्धित्याद्यसगतमिति प्रामादिक तत्पदेन तावावास्तूनिति मत्रस्याविवक्षणात्तत्त धामान्युष्मसीति मत्रस्यैव विवक्षितत्वात्तस्य च विष्णो कर्माणि पश्यत एतन्मत्रपूर्वत्वात् तत्र च गोकुलमेव मुख्यतया

निरूपितमतोन्यस्यार्थस्य तदङ्गतया निरूपणेपि नावधारणासंगतिः । एतेन गोकुलस्थे-त्यादिकं निरस्तम् ॥ कर्माणि पश्यतेत्यस्यापि यशोदास्तनपानादिरूपाणि कर्माणि पश्यते-त्यर्थः । यत्तु ( कर्मशब्देन कर्मानुरूपफलदानानि गृह्यंत ) इति तन्मंदम् । कर्मपदस्य तादृशार्थबोधकत्वात् लक्षणया तदर्थबोधकत्वे तु वाक्यार्थस्य बाधे लक्षणा संभवति ननु तस्यार्थस्य संभवेपि शक्तितो लक्षणाया जघन्यत्वात् तादृशार्थकत्वं किंच त्वन्मते पश्यते-त्यस्य योगबलेन जानीतेत्यर्थकत्वं तदपि लक्षणयैवेति गौरवं यत्तु दृशेर्ज्ञानसामान्यार्थ-कत्वमुक्तं तदप्यसत् । आकाशविषयकज्ञानवति पुरुषे प्रयुक्तस्याकाशं पश्यतीति वाक्यस्य प्रामाण्यापत्तेराकाशं न पश्यतीत्यस्याप्रामाण्यापत्तेश्च तस्माद्दृशेर्लौकिकप्रत्यक्षार्थकत्वमेव तच्च गोकुलस्य तत्रत्यलीलायाश्च नित्यत्व एवोपपद्यते यदपि ( तावामिनि मंत्रे निरुक्ते उरुगायस्य विष्णोर्महागतेरित्युक्तत्वेन मंत्रांतरस्थविष्णुशब्दोपि महागतिवाचक इति तदर्थं महागतित्वं च सूर्यादावप्यस्तीति तत्परतायां तात्पर्यं प्रतीयत ) इत्युक्तं तदपि यास्कभाषितं प्रसिद्धार्थकत्वं परित्यज्याप्रसिद्धार्थकत्वकल्पने मानाभावात् । चंद्रादिक-मादाय विनिगमनाविरहाच्च तत्रापि मंत्रस्य योजयितुं शक्यत्वात् ॥ किंच मंत्रस्य भग-वत्परत्वं नास्ति सूर्यादिपरत्वमेवेत्याग्रहेपि तन्मायामोहितत्वमेव बीजमित्यपि बोध्यम् । व्रतस्पर्शोपि न व्रतप्रयोजकः किंतु तदाचरणमेव तथैव लोके दर्शनात् ॥ नहि लोके सूर्यादीनां मनुष्यव्रतसंबंधव्यवहारः ॥ विष्णुना तु कात्यायन्यर्चनादीनि व्रतान्याचरि-तानि किंचेंद्रमित्रतापि गोवर्द्धनोद्धरणलीलायां कृता । अत एवोक्तं तन्मंत्रे "इंद्रस्य युज्यः सखे" ति गोपीनां पातिव्रत्यादिरूपनियमबाधनमपि पुराणेषु व्यासशुकादिगीतं श्रूयतेऽत एव बाधनरूपस्पशधात्वर्थोपि सगच्छते । त्वन्मते तु सर्वव्रतप्रयोजकतया व्रतस्पर्शकत्वं सर्वयज्ञप्रवर्तकतया चंद्रसुपरत्वं विष्णुपदस्य सूर्यार्थकत्वमिति सर्वत्र लक्षणैवाश्रयणीया सा च वेदेनुचिता मुख्यार्थाबाधे तु सर्वत्रैवानादरणीयेति किंच तादृशार्थकत्वेपि सर्वव्रतप्रयोजकत्वसर्वयज्ञप्रवर्तकत्वयोर्निर्णायपि सम्भवेन तत्त्यागे मानाभावः ॥ माधवकृतव्याख्यानेपि यजमानवाचकपदाभावादयमित्याद्यध्याहार्यं श्रीकृष्णपरत्वे तु सम्यक्तया मंत्रार्थान्वयः संगच्छत इति तत्परत्वमेव मंत्रस्य युक्तं तस्माच्छ्रीकृष्णस्य मर्यादाभंजकत्वे श्रीकृष्णउद्धवयोः को विशेष इत्याद्युक्तिः श्रीकृष्ण-स्वरूपानभिज्ञानामासुरप्रकृतीनां तन्मायामोहितत्वप्रयुक्तैव ॥ नन्वेवमपि "यतो व्रतानि पस्पश" इति लिट्प्रयोगाल्लीलाया अनित्यत्वापत्तिः लिटो भूतार्थकत्वात् तत्त्वस्य च वर्तमानध्वंसप्रतियोगित्वरूपत्वादिति चेन्मैवम् ॥ एतन्मंत्रस्यानुवादकतया भूतत्वे तात्पर्याभावादन्यथा "सदेव सौम्येदमग्र आसीदात्मा वा इदमग्र आसीदि" त्यत्रापि भूतत्वबोधापत्ति इष्टापत्तिरिति चेत्तर्हि कस्य भूतत्वमिति वक्तव्यम् । आत्मनो वा इदं-शब्दवाच्यस्य वा सद्रूपताया वा नाद्यः । आत्मनो नित्यत्वादुक्तभूतत्वस्य तस्मिन्बाधात् नापि द्वितीयः इदंशब्दस्य प्रत्यक्षबुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नवाच-कत्वेन प्रत्यक्षे भूतत्वान्वयासंभवात् तृतीयोपि न संभवत्यधुनापि सद्रूपताया सत्त्वा-द्वारोपितस्याधिष्ठानातिरेकेण सत्त्वानभ्युपगमात्तस्यादृगत्या लकारार्थस्याविवक्षैवाभ्युपेया

तथात्रापीति गोपीना तडिद्रूपत्व तु गौरवर्णतया प्रकाशकतया च वर्णित कृष्णस्य मेघ तुल्यश्यामत्वादत एव मेघश्याम तडिद्गौरीन्दुतुल्यास्येति कविभिर्वर्ण्यते ॥ एतेन ( गोपीना तडिद्रूपत्वे मानमन्वेष्य ) मिति निरस्तम् ॥ किच पूर्वोक्तमन्त्रयोर्न सूर्यादिपरत्व तदनतर पठिते "तद्विप्रासो विपन्यवो जागृवास समिंधते विष्णोर्यत्परम पद" मिति मंत्रे तद्वाचकपदाभावात् विष्णुवाचकस्य पदस्य गोलोकवाचकस्य विष्णोर्यत्परम पदमिति वाक्यस्य सत्वात् क्लिष्टकल्पनयान्यार्थकल्पने तु सर्वेषा मत्राणा कथचिदन्यार्थकत्वसभ वेन सर्वत्रानाश्वासप्रसगात् स्पष्टार्थ परित्यज्यास्पष्टार्थकल्पने मानाभावाच यदपि एतत्सत्यमित्यत्र सत्यशब्दो नाबाधितार्थक किंतु यथात्वदर्थतावदर्थक तत्त्व यथा प्रतीयमानत्वमिति प्रलपितवान् तत्र स प्रष्टव्य यथा प्रतीयमानत्वशब्देन किं त्वया विवक्षित प्रतीयमानतुल्यत्वमथ वा प्रतीतिसमकालिकत्व वा नाद्य शुक्तिरजतस्यापि प्रतीयमानघटादितुल्यत्वात्सत्यत्वापत्ति द्वितीये तु क्षणिकत्वादापत्ति प्रतीतीना क्षणि कत्वात् ॥ नच दृष्टिसृष्टिवादे तदिष्टमेवेति वाच्यम् ॥ तस्य पूर्वमेव निरस्तत्वात् ॥ यत्तु ( ब्रह्मपुरशब्देन शरीरमेव ग्राह्य अन्यथा जराया प्राणवियोगरूपवधस्य शरीर धर्मतया प्रसिद्धत्वेन गोकुले तदभावेने ) त्याद्युक्त तदसगत तदग्रिमस्य ( ब्रह्मैवैत च्छब्दे परामृश्य तत्प्रकरणस्थब्रह्मलोकपदवत्सामानाधिकारण्येन ब्रह्मपुरशब्देनोच्यत ) इति तत्कथनस्य विरोधात् ॥ किंच ब्रह्मपुरशब्देन शरीरग्रहणे "एतत्सत्य ब्रह्मपुर- मेतस्मिन्सर्वे कामा समाहिता' इति वाक्यविरोध शरीरस्य सत्यत्वाभावात् सर्व कामसमाधानस्यापि तत्राभावात् यदि च पूर्वोक्त विस्मृत्य ब्रह्मैव ब्रह्मपुरशब्देन विवक्षित चेत्तदा जराया वधस्य च तत्र केनाप्यनगीकारेण तच्छकाया एवाभावेन तत्समाधान "नास्य जरसा जीर्यति न वधनास्य हन्यत" इत्यादिरूप श्रुतिप्रतिपादित मसगत स्यात्तस्मादसगतत्वात् तथा चेत्यारभ्य तत्रैव सभवादित्यत प्रलपनमनादरणी- यमेव ॥ अस्मन्मते तु तच्छब्देन गोकुलग्रहणे पुरसामान्यात् जीर्णत्ववधयोराशका जायत इति तदुत्तरसगति तस्य च नित्यत्वाभ्युपगमे 'नैतत्सत्य ब्रह्मपुर" मित्या दिना प्रतिपादितस्य सत्यत्वस्यापि सगति ॥ तस्य लीलास्थानत्वेन भक्तमनोरथ विषयत्वा "दस्मिन्सर्वे कामा समाहिता' इति श्रुतिप्रतिपादितमपि सगच्छते ॥ किंच तस्मिन्नेव "दह्र पुडरीक वेश्म दहरोस्मिन्नतराकाश" इत्यादिनोक्तस्य पुडरीकाकारभग वद्देहमनोपि सत्वात्तादृशश्रुतिभागोपि सगच्छते "किं तत्र विद्यते यदन्वेष्टव्य यद्वा विजिज्ञासितव्य" मित्यादिना पुरुषोत्तमविषय प्रश्न तस्माद्गोकुलमेव तत्र ब्रह्मपुरश ब्देनोच्यते ॥ पुरशब्दस्यापि नगर एव कोशादौ प्रसिद्धि नवद्वारे पुरे देहीत्यादौ तु तत्सादृश्याद्देहेप्यारोप 'वापी कापि स्फुरति गगन' इत्यादौ नाम्या वाप्यारोप वत् ॥ अत एव मुख चद्र इत्यादौ चद्राभेदारोपो मुख इत्युक्तम् ॥ यच्च न च तेषा प्रतिष्ठितत्वेत्यादिना टीकाकृद्भुक्त किंचिदनूद्य ( परमेश्वरस्य मनोरथानाधारत्वे सर्वाश्रयत्वव्याहतेस्तस्य तदाधारत्वा ) दित्यादि तेनोक्त तत्र परमेश्वरपदन शुद्ध ब्रह्म विवक्षित शबल वा नाद्य तस्मिन्कामानामभावेन सर्वे कामा प्रतिष्ठिता

इत्यसगत यदि च "सर्वकाम सर्वगंध सर्व रस" इत्यादिश्रुत्यनुरोधात् मनोरथाधा रत्व तस्मिन्नीक्रियते तदा तादृशश्रुत्यनुरोधाद्रसाधारत्वस्यापि तत्र स्वीकरणीयतया शुद्धत्वहानिस्तत्त्वेपि शुद्धत्वस्वीकारे विरुद्धधर्माश्रयत्वागीकार विना तदनुपपत्त्या परमतप्रवेशापत्ति ॥ द्वितीये "ब्रह्मविदाप्नोति पर"मिति श्रुतिविरोध तत्र ज्ञेयब्रह्मण सकाशात् परब्रह्मण उत्कृष्टत्व प्रतिपादित तस्यैव च "सोश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" इत्यनेन मनोरथाधारत्व प्रतिपादित तथा च तत्र मनोरथाना कामपदेन ब्रहेपि नासगतमिति कथनेन तयो श्रुत्योरेकवाक्यत्वागीकार धनयतत्त्व समत एव च तच्छ्रुतिप्रतिपादितमनोरथाधारस्य शयस्त्वेन तस्य त्वन्मते परत्वाभावात् तादृशश्रुतिविरोधो दुर्वार एवेति बोध्यम् ॥ एव च कामपदेन भोगोपकरणान्येवाभिप्रेतानि । अत एवोक्त "तस्मिन्सर्वे कामा प्रतिष्ठिता" इति श्रीगोकुल एव तेषा प्रतिष्ठितत्व नित्यत्वादन्यत्र तु तेषामप्रतिष्ठितत्वमित्यपि ध्वनितम् ॥ नच कामपदस्य सोकामो निष्काम इत्यादौ मनोरथपरत्वस्य दृष्टत्वान्मनोरथार्थकत्वमेवेति वाच्यम् ॥ मनोरथपरत्वे "सोश्नुते सर्वान्कामान्सहे"ति श्रुतिविरोधापत्ते तेषामश्नानासभवात् भोगोपकरणे वृत्तिव्याप्तिसभवेनाश्नुत इति सगच्छते मनोरथेषु वृत्तिरूपेषु तदसभवेन तदसगति स्पष्टैवेति ॥ व्यासैस्तु श्रीगोकुलस्थहृदयपुडरीकस्यापि दहरत्वमुक्त तत्रापि भगवान् प्रकटीभूय स्थित इति पुरुषोत्तमलीलोपयोगिपदार्थो आकाशादयस्तत्रापि स्थिता इति द्यावापृथिव्यावस्मिन्समाहित इति सगच्छते तेषा भगवद्रूपत्वात्, अत एव-ये त्यक्तलोकधर्माश्च मदर्थे तान्बिभर्म्यहमिति भगवद्वाक्यमपि सगच्छते । त्यक्ता लोकव्यवहार्यत्वकालाद्यधीनत्वबाह्यत्वादयो धर्मा यैस्तानह धारयामि स्वस्वरूपेणेत्यर्थ । भक्तपक्षे तु मत्सेवासक्त्या लौकिकधर्म त्यक्तवतोऽह बिभर्मि पालयामीत्यर्थ उभयथाप्यसन्मत एवोक्तवाक्ये सगच्छते ॥ यत्तु लोकधर्मपदेन राजसेवादय एव ग्राह्या न वस्तुस्वभावादय इति तेनोक्त तत्पूर्वोक्तेन सकोचे मानाभावादित्यनेन तद्वचनेन विरुद्धत्वादुपेक्ष्य पूर्वापरानालोकनमूल च तस्माल्लीलास्थपदार्था नित्या अपि लौकिकस्वरूपा इव वस्तुतस्त्व लौकिका ॥ अत एवोक्त "लोकवत्तु लीलाकैवल्य"मिति लीलाशब्दस्य केलिवाचकत्वेपि लीलोपयोगिपदार्थसपादनेपि लीला करोतीति प्रयोगदर्शनात्तेषामपि लीलाशब्दप्रतिपाद्यत्वम् ॥ एतेन लीलाशब्देत्यादिकमपास्तम् । योपि यत्त्वेतत्सूत्रव्याख्यायामित्यादिना भाष्यकृद्‌कौ दोष उद्भावित सस्वमतमनवेक्ष्यैव तन्मतेपि निष्कामस्य ब्रह्मण केलिप्रवृत्तिर्न सभवति सकामत्वे चाप्तकामहानानीश्वरत्वानुपपत्ति नह्याप्तकामस्तत्कामना करोति नापि प्रवर्तते तदुक्त-चिकीर्षाकृतिसाध्येष्टसाधनत्वमतिस्तथा ॥ उपादानस्य चाध्यक्ष प्रवृत्तौ जनक भवेत् ॥ चिकीर्षा च कृतिविषयकेच्छेति ॥ भाष्यकृता त्वयमाशय लीलाया स्वस्वरूपानदत्वाद्व्यग्यव्यजकोभयरूपस्वयप्रयोजनरूपत्वान्न तस्या प्रयोजनान्तर युज्यते प्रयोजने प्रयोजनान्तरापेक्षणेऽनवस्था स्यात् ॥ नहि सुखार्थं प्रवृत्तस्य सुखप्रयोजनान्तरमभिकाक्षति तस्यैव पुरुषार्थत्वादेव प्रकृतेपि लीलैव प्रयोजन तथा च लीलाया न पर्यनुयोग ॥ एवमेवेश्वर किमर्थं तत्र प्रवर्तत इति पर्यनुयोगोपीश्वर

त्वादेव न सभवति यथा लोके नरेश्वरे कस्मिंश्चित्कर्मणि यदृच्छया प्रवृत्ते भृत्यैर्न पर्यनुयुज्यते तथैवात्रापि । अत एवोक्त सूत्रकृता लोकवदिति एवचैतादशार्थाज्ञानमूलक स्तथाहीत्यादिकस्तत्प्रलापो हेय । भगवत्पादैरपि तत्सूत्रव्याख्यानेऽयमेवार्थ प्रकटी कृतोऽत एव यथा लोके कस्यचिदाप्तैषणस्य राज्ञो राजामात्यस्य वा लीलाव्यतिरिक्त किंचित् प्रयोजनमनभिसधाय केवल लीलारूपा प्रवृत्तय सभवतीत्युक्तम् ॥ लीलारूपा आनदव्यजका इत्यर्थ । एतेन (लीलाया तु स्वानुभाव्यसुखविलक्षणत्वेने) त्यादित दुरुक्तिर्निरस्ता ॥ तत्र यथा लोके कश्चिदित्यादिभगवत्पादोक्ते रूपष्टभकतयाभिधान तु तदभिप्रायानवबोधात् ॥ न च प्रयोजनमनभिसधानेन प्रवृत्ताया लीलाया प्रयोजनत्वा भाव स्पष्टमेव भगवत्पादैरुक्त इति कथ तस्य प्रयोजनत्वपरत्व उपष्टभकतयाभिधान सगतमिति वाच्यम् ॥ प्रयोजनमनुद्दिश्य मदोपि न प्रवर्तत इति न्यायाल्लीलाया प्रयोजनत्वानगीकारे प्रवृत्तिर्व्याहन्येत ॥ अत एव व्यतिरिक्त किंचित् प्रयोजनमन भिसधायेति वैरुक्तमन्यथा प्रयोजनमनभिसधायेत्येव कुतो नोक्त तस्माद्व्यतिरिक्त पदस्वारस्याल्लीलाव्यतिरिक्तमिति लभ्यते तेन लीलारूपप्रयोजनमभिसधायैवेति तद भिप्राय । अत एव तदग्रे केवल लीलारूपा प्रवृत्तय इत्युक्तम् ॥ यत्तु प्रयोजनानभि सधाने हेतुराप्तैषणत्वमित्युक्त तदपि प्रवृत्तय इति भाष्यकृद्वचनेन विरुध्यते प्रवृत्तिमात्रे चिकीर्षादिरूपैषणाया हेतुत्वात् ॥ ननु लोक यथोच्छ्वासादिचेष्टाहेतुप्रवृत्तौ न कस्या श्चेषणाया हेतुत्वमेवमत्रापि नैषणाया हेतुत्वमिति चेन्न ॥ उच्छ्वासादिहेतुभूतस्य जीवनान्यथानुपपत्तिकल्पस्य जीवयोनियत्नस्य तथात्वेपि तद्भिन्नस्य चिकीर्षादिमतरेणो त्पत्तौ मानाभावात् लीलाया उच्छ्वासादिसादृश्ये मानाभावाच्चेति सा च लीलाकैवल्य मोक्षरूपेति परमपुरुषार्थ इत्यथ । अत एव कैवल्यमित्युक्त त्वदुक्तार्थकत्वे तु तत्पदस्य वैयर्थ्यात् लीलैवेत्यस्य सम्यक्त्वात् । एतेन यच्चेत्यादिकमपास्तम् ॥ इति द्विचत्वारिंश त्खडखडनाभासस्याभासत्वप्रदर्शनम् ॥ अथ यत्त्वत्रेत्यादेस्त्रयश्चत्वारिंशत्खडखडना भासस्याभासत्व प्रदर्श्यते ॥ प्रपचप्रवाहस्यानादित्व तु चिरकालिकत्वेन यथा "अक्षय्य ह वै चातुर्मास्ययाजिन सुकृत भवती' त्यत्राक्षय्यत्वमाभूतसप्लवस्थितिमत्व न तु क्षयरा हित्य "यथेह कर्मचितो लोक क्षीयत एवमेवामुत्र पुण्यचितो लोक क्षीयत" इति श्रुतिविरोधापत्तेरेव च न पूर्वापरविरोध ॥ यत्त्वय (मध्याय प्रसिद्धप्रवचनादिभिर्म हाभारतादिभिरलब्धसवाद) इत्यादिना तेन भगवल्लीलाया नित्यत्व वृदावनादीना च तत्वमसहमानेन तल्लीलानित्यत्वप्रतिपादकस्याध्यायस्य क्षेपकत्वमुक्त तत्र स प्रष्टव्य यदि भारतेपि भगवल्लीलानित्यत्वप्रतिपादिक वाक्य स्यात्तत्त्व समत न वा आद्ये तत्र क्षेपकत्वशका कुतो नेति वक्तव्य नहि द्वैपायनैरिदमपि कुत्रचित् प्रतिपादित महा भारत क्षेपका अध्याया न भविष्यन्तीति येन तव तत्र सशयो न स्यात् द्वितीये तु महाभारत प्रमाणत्वेनागीकुर्वतोपि तन्मात्रेऽममर्ति कुर्वाणस्यासुरत्वादन्यन्न कारणमिति सादरस्य ब्रह्मज्ञानेन कृतकृत्यत्वबोधकश्रुतिषु कथ नाप्रामाण्यशकापि चित्रमेव ॥ यत्तु- प्राकृते प्रलये प्राप्ते व्यक्तेऽव्यक्त गत पुरा ॥ शिष्टं ब्रह्मणि चिन्मात्रे कालमायातिगेऽक्षरे ॥

इत्यादिश्लोकेषु चिन्मात्रे ब्रह्मणि दिष्ट इत्युक्त्वा वैकुंठसंज्ञको वर्तत इत्युक्तिर्विरुद्धेत्यादिना तेन शंका कृत्वा साप्यविचारितरमणीया वैकुंठस्य प्राकृतत्वाभावात् 'न यत्र मायाकिमुतापरे हरे' इत्यादिना तत्र तस्याभावप्रतिपादनात् वैकुंठस्य चिन्मयत्वात् केवलं कुतर्काश्रयणे तु प्रलये नारायणस्य शेषशय्यायां शयनप्रतिपादकानां महाभारतादीनामप्रामाण्यापत्तिः शेषस्याप्यप्राकृतत्वे तर्कविरोधात् तर्कविरोधात्तेषामप्यप्रामाण्यमेवेति चेत् प्रलये निर्गुणमवशिष्यत इत्यपि न युक्तिसहम् ॥ तस्मात्केवलं तर्कमाश्रयता "ब्रह्म वा इदमग्र आसी" दित्यादिश्रुतीनामप्यप्रामाण्यमंगीकृत्य शून्यवाद एव स्वीकृतः स्यात् न च वैकुंठस्य ब्रह्मस्वरूपत्वाभिप्रायत्वमंगीक्रियते चेज्जगतोपि तन्मते "तदात्मानं स्वयमकुरुते" त्यादिश्रुत्यनुरोधाद्ब्रह्मस्वरूपत्वाविशेषात्तस्यापि तदा सत्त्वं कुतो नोपेयत इति वाच्यम् ॥ प्रकारभेदात् जगतो ब्रह्मरूपत्वं कार्यकारणयोरभेदात् यथा घटादेः पृथिवीरूपत्वं वैकुंठस्य तु न कार्यत्वं किंतु चिन्मयब्रह्मरूपत्वमेवेति । अत एवोक्तं-ब्रह्मानंदमयो लोको व्यापी वैकुंठसंज्ञकः ॥ निर्गुणो नाद्यनंतश्च वर्तते केवलेश्वरे ॥ किंच कार्यस्यानित्यत्वं कारणे स्वस्वरूपं विहाय तदात्मना सत्त्वं वैकुंठस्य तु स्वस्वरूपेणैव सर्वदा सत्त्वमिति विशेषः । एतेन वैकुंठः किंश्चेत्यादिकं निरस्तम्, नच न सत्यलोकात्परो लोकोस्तीति पराशरवचनाद्वैकुंठलोके मानाभाव इति वाच्यम् ॥ वैकुंठप्रतिपादकभागवतादिपुराणविरोधेन तादृशवाक्यस्य प्राकृतलोकनिषेधपरत्वात् ततश्च वैकुंठस्याप्राकृतत्वमेव सिध्यति ॥ यत्तु निर्गुणं दर्शयेति याचमानानां नारायणांतःश्रीकृष्णतल्लोकादिदर्शनं तु प्रतारणैवेत्यादिप्रलपितं तदपि श्रीकृष्णस्वरूपानभिज्ञत्वात् । एते चांशकलाः पुंसः कृष्णस्तु भगवान्स्वयमित्यादिना श्रीकृष्णस्याधिक्यप्रतिपादनात् तस्माद्वेदपुराणादिवचनेषु दूषणमुद्गारवत्तदुपेक्ष्य एव ॥ यदपि ( जारधर्मेण कृतकृत्यत्वोक्तिस्तु सर्वथा शास्त्रविरुद्धैवे ) रयुक्तं तदपि शास्त्रानभिज्ञत्वात् भगवद्विषयस्य भावस्य सर्वशास्त्रेषु मोक्षसाधनत्वं प्रतिपादितं तत्र भावो जारबुद्ध्या स्याच्छुद्धबुद्ध्या वा । अत एव रावणादीनामपि भगवत्प्राप्तिः। उक्तं च योगशास्त्रे "समाधिरीश्वरप्रणिधाना" दिति तदर्थस्तु ईश्वरार्पितसर्वभावस्य समाधिसिद्धिर्यायात् सर्वमीप्सितमवितथं जानाति देशांतरे देहांतरे च ततोस्य प्रज्ञा यथा प्रजानातीति किंच भगवद्विषयकप्रेम्णा निरोधसंस्काराणामुदयो जायते व्युत्थानसंस्काराणां चाभिभवस्तदा संस्कारशेषं चित्तं समाधियोग्यं भवति तथोत्कटप्रीत्या सा च क्षीणां जारधर्मे यथा भवति तथान्यत्र न भवतीति ततश्च सर्वार्थतारूपचित्तधर्मक्षये एकाग्रतायाश्चोदये सति चित्तमपायोपजननयोः स्वात्मभूतयोरनुगतं समाधीयते स एव समाधिरूपश्चित्तधर्मस्तेन च भगवत्स्वरूपप्राप्तिः अयमेवार्थो भगवता पतंजलिना योगसूत्राभ्यामुक्तः तथाच सूत्रं "व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ निरोधक्षणचित्तान्वयो निरोधपरिणामः सर्वार्थतैकाग्रतोदयौ चित्तस्य परिणाम" इति । इदं च योगशास्त्रानुसारेण व्यासमते तु "सपद्या विहाय स्वेन शब्दा" दिति सूत्रस्वारस्यवोरमभावानंतर ब्रह्मस्वरूपप्राप्तिः स च गोपीनामेव मुख्य. तासां भगवत्प्रेम्णा सर्व-

सिन्भगवत एव भानात् ततश्च भगवत्स्वरूपबलेनैव तासामाविर्भावो लीलायाम् ॥ ततश्च "सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिते" ति श्रुतिप्रतिपादितः पुरुषोत्तमेन श्रीकृष्णेन सह सर्वकामभोग इति ॥ अत एवोक्त-केवलेन हि भावेन गोप्यो गाव खगा मृगा ॥ येन्ये मूढधियो नागा सिद्धा मामीयुरञ्जसा ॥ इति । एवं च मर्यादामार्ग एवाय दोषो न तु पुष्टिमार्गेपीति ॥ यच्च तेनोक्तं गोकुलादिदर्शनं तु अधिष्ठानदर्शनसौकर्याय न तु तत्स्वरूपत्वबोधायान्यथा गोपीनामपि तदनापत्तौ वरादिकं सर्वं विप्लवेतेति तदपि न साधीय । अधिष्ठानदर्शनं विना भगवद्दर्शनस्य तै प्रार्थितस्य सभवेनाप्रार्थितगोकुलादिदर्शनं निरर्थकमापद्येत तस्मै स्वरूपदर्शनमात्रार्थं प्रार्थितेन भगवता यद्वृन्दावनादि दर्शितं तेन वृन्दावनादियुक्तसामग्रीविशिष्टमेव सदा भगवद्रूपमिति ज्ञापितं तथा च भगवता यथा प्रार्थितं स्वस्वरूपमेव दर्शितं लीलाया तु यथा वरदानादिकं न विप्लुतं भवति तथा वक्ष्यते ॥ नच गोकुलादीनां स्वरूपात पातित्व चेत्तर्हि वृक्षस्य स्वगतभेदवत्त्वन्मते ब्रह्मणि तस्य प्रसक्तावद्वैतहानिरिति वाच्यम् । सर्वेषां चिन्मयत्वेन ब्रह्मरूपत्वात्तद्भिन्नत्वाभावात् नहि घटकरकाद्याकारेण वर्तमानायामपि मृदि घटादिभेद एव येन ब्रह्मण्यपि भेद आशक्यते तस्माद्वस्तुन एव तथात्वान्न दोष इत्यवधेयम् ॥ किंच न वय द्वैतवादिवद्भेद स्वीकुर्मो येनाद्वैतपदस्य पारिभाषिकत्वमापद्येत नापि पारमार्थिकमभेद भेद च येन परमतप्रवेशापत्ति स्यात् । नाप्यौपाधिक भेद किंत्वीश्वरेच्छाकृत भेदाविरोधिन कार्यसमकालिक भेदमिति । एव च वृक्षादिपदवदद्वैतपद पारिभाषिकमेव त्वन्मते स्यादित्यादिनोक्तस्य दोषस्यानवकाश ॥ किंचैतादृशाभेदस्वीकारे यदि तत्पदस्य पारिभाषिकत्व तदौपाधिकभेदस्वीकारेपि कुतो न स्यात् ॥ अत एवोक्त गोपालतापनीये-तस्मान्न भिन्ना एतास्तु आभिर्भिन्नो न वै प्रभुरित्युक्तम् ॥ यत्तु ( पूर्वार्द्धस्य महावाक्यै समानार्थत्वादित्यूचे ) तदपि न सम्यक् । तन्मते हि महावाक्यानि "प्रज्ञान ब्रह्म अयमात्मा ब्रह्म तत्त्वमसि अह ब्रह्मास्मी"त्येवरूपाणि तेषां च न प्रकृतवाक्यसमानार्थत्वसंभवस्तथाहि चक्षुरादिद्वारा निसृतात करणवृत्तिव्याप्यतत्तत्पदार्थप्रकाशकस्य प्रज्ञानपदवाच्यस्य सर्वाधिष्ठानस्य ब्रह्मपदवाच्यस्य परस्परविरुद्धांशत्यागेन लक्ष्यस्वरूपमात्राभेदबोधकस्य प्रथमवाक्यस्यैवमहंपदवाच्यस्य जीवस्यात करणसाक्षिप्रतिबिंबसंघातरूपस्य पूर्वोक्तस्य ब्रह्मपदवाच्यस्यापि तत्तदंशत्यागाल्लक्ष्यस्वरूपमात्राभेदबोधकस्य द्वितीयस्य तत्पदवाच्यसर्वज्ञत्वादिविशिष्टत्वपदवाच्याल्पज्ञत्वादिविशिष्टयोरपि विरुद्धविशेषणांशपरित्यागेन भागत्यागलक्षणया स्वरूपमात्राभेदबोधकतृतीयमहावाक्यस्य तथैवापरोक्षबुद्धिविषयस्याहपदवाच्यस्य सर्वजगदधिष्ठानस्यैव ब्रह्मपदवाच्यस्यापि च तत्तद्विरुद्धांशत्यागेनाखण्डस्वरूपबोधकस्य चतुर्थस्य महावाक्यस्य चोक्तवाक्यस्य च समानार्थकत्वे तच्छब्दवाच्यसर्वज्ञत्वादिलक्षणस्यैतच्छब्दवाच्याल्पज्ञत्वादिलक्षणादभेदस्य पूर्वोक्तमार्गेण कथंचित्सिद्धावपि तस्यार्थस्य "तस्मान्न भिन्ना एतास्तु ताभिर्भिन्नो न वै प्रभु"रित्यनेन लाभासंभवात् ॥ कथंचिल्लाभेप्येकेनैव पादेन तत्सिद्धौ पादान्तरस्य वैयर्थ्यं दुर्वारमेवेति संक्षेप ॥ वैकुण्ठपदं तत्समधिपरमित्यपि

रितं वचः सर्वत्र मुरभ्यार्थलाभे श्रीजाभागन् यथेत्यादिना शुद्धाद्वैतमतनिरोपं मतान्तर-प्रवेशादिका ये तेनोक्ता दोषास्ते तु पूर्वमेवोद्धृताः किंचेत्यादिना ॥ किंच भगवद्ध-र्माणां भगवता सहाभेदो भेदश्च स्यात्। "प्रकाशाश्रयवद्वा तेजस्त्वा"दिति सूत्रे प्रपंचितो विस्तरभयान्नेह लिख्यते । एवं च लीलाया नित्यत्वे कर्तुरनित्यत्वस्य संबंध-नित्यत्वस्य प्रमाणाभावस्य वा प्रमाणतात्पर्याभावस्य वा सतत्वपर्यायतत्वस्य वा गौण-प्रयोगस्य वा उत्पत्तिमत्त्वस्य वा नाशप्रतियोगित्वकल्पितत्वयोर्वा अननुभवस्य वा तन्निरूपताभावेन उपासकेऽपराभवसंकटे तेषु प्रमादस्य वा इदानीन्तनाकारकलीला-स्थानामवतारकालीनानां कादाचित्कत्वेनानुभवस्य वा प्रमाणदौर्बल्याधिष्ठानध्वंस-प्रयुक्तलीलासंबंध्यनित्यत्वासाधारणजनकत्वप्रयत्नौचित्यत्वभगवदिच्छात्वानां वा बाधकत्वं मयुक्तम् ॥ कर्तृनित्यत्वादीनां जयतीत्यादिरूपप्रयोगादिभिः प्रतिपादनात् ॥ इति ग्रयश्चत्वारिंशत्खंडखंडनाभासस्याभासत्वप्रदर्शनम् । अथ तत्र श्रुतौ जज्ञानेत्यादेश्च-तुश्चत्वारिंशत्खंडखंडनाभासस्याभासत्वं प्रदर्श्यते ॥ तत्र लीलायाः क्रमेणाविर्भावः प्रतिपादितः तत्र जज्ञानेत्यादि भूतप्रयोगानामाविर्भावक्रमानुसारेण भूतभविष्यद्वर्तमा-नत्वबोधकत्वं न तु तत्पदार्थानां ध्वंसादिबोधकत्वम् ॥ न च तदनित्यत्वं विना तादृशप्रयोगाणामभाव एव स्याद्भूतत्वादीनां ध्वंसाघटितत्वे सत्यभावादिति वाच्यम् ॥ तत्रान्यदीयोत्पत्तिनाशादिकमादाय भूतभविष्यदर्थकप्रत्ययसंभवात् ॥ अत एव आत्मास्ति पर्वताः संति तत्र आसीत् इह मे क्षा संवत्स्यामि भविष्यामीत्यादौ तत्कालीनराज्ञो परमा-ण्वादीनां वा क्रियाया अनित्यत्वात्तत्स्थित्योरपरत्वादिकमादाय वर्तमानत्वादिकं ज्ञेयमित्युक्तं भूषणकारैः ॥ वाक्यपदीयेपि—परतो भिद्यते सर्वमात्मा तु न विकल्प्यते ॥ पर्वतादि-स्थितिस्तस्मात्पररूपेण भिद्यते ॥ इत्युक्तम् ॥ एवं च तादृशप्रयोगानुसारेणानित्यत्वं न संभवतीति ॥ एतेन तत्र श्रुतावित्यादिकं निरस्तम् ॥ नच "आत्मासीत्तम आसी"दित्यादौ श्रुत्यंतरपर्यालोचनयात्मादीनां वर्तमानकालसत्त्वनिश्चयेन तथात्वकल्पनेपि प्रकृते तथा वर्तमानत्वबोधकस्याभावान्न तादृशप्रयोगोपपादनं युक्तमिति वाच्यम् ॥ अत्रापि श्रुति-स्मृतीनां पूर्वं दर्शितत्वात् ॥ जयतीत्यादिप्रयोगाणां वर्तमानत्वप्रतिपादकानामनुपपत्त्या च भूतत्वादीनामन्यदीयक्रिययैवोपपादयितुमुचितत्वात् जयतीत्यादिप्रयोगाणामन्यथो-पपादने तु आत्मासीदित्यादिप्रयोगाणामन्यथोपपादयितुं शक्यत्वेन तादृशप्रयोगसाधु-त्वार्थं "इह हि भूतभविष्यद्वर्तमानकालिकराज्ञां क्रियास्थित्यैतेरधिकरण" मित्यादिना भाष्यकृतां प्रयासो विफल एव स्यात् ॥ श्रीकृष्णदेवताकमंत्रस्येन्द्रदेवताकत्वकथनमपि प्रमादादेव ॥ किंच "इंद्रदेवताकत्वे जज्ञान एव व्यवधात्तस्पृध" इति तन्मंत्रप्रतिपादि-तार्थो न संगच्छते । नहीन्द्रेण जातमात्रेणैव शत्रुवधः कृत इति पुराणेषु प्रतिपादितम् । श्रीकृष्णेन तु जातमात्रेणैव पूतनादीनां वधः कृत इति श्रीमद्भागवतादिषु प्रतिपादितम् ॥ "प्रापश्यद्वीरो अभिपौंस्यं रण"मिति श्रुतिभागोपि श्रीकृष्णपक्ष एव संगच्छते ॥ तदर्थस्तु वीरो विक्रान्तो अभिपौंस्यमात्मपौरुषानुरूपं दैत्यैः सह संग्रामं प्रापश्यदनुभूतवान् । किंच स्वरसंमतार्थकत्वे "अवृश्चिदद्रिमवसस्यदसृज"दित्यग्रादीनिति पाठः स्यात्"

इंद्रेणानेकाद्रिपक्षच्छेदनादिरूपावयवविभागस्य कृतत्वात् ॥ अस्मन्मते त्वेकस्य गोवर्द्धनस्योत्पादनं श्रीकृष्णेन कृतमिति तत्संगतिः ॥ अन्यथैकत्वस्य स्वसजातीयद्वितीयराहित्यरूपतयैकवचनासंगतिः स्यात् ॥ नचैकपर्वतोत्पाटनेपि तत्पर्वतसजातीयद्वितीयपर्वतस्य सत्वादसंगतिर्दुर्वारैवेति वाच्यम् ॥ सजातीयद्वितीयराहित्यं हि सजातीयनिष्ठभेदाप्रतियोगित्वं साजात्यं च स्वसमभिव्याहृतपदार्थसंसर्गित्वविशिष्टप्रकृत्यर्थतावच्छेदकरूपेण बोध्यम् । तथा च श्रीकृष्णकर्तृकोत्पाटनकर्मत्वविशिष्टप्रकृत्यर्थतावच्छेदकपर्वतत्वस्वरूपेण सजातीयद्वितीयपर्वतस्यासत्वान्न तादृशभेदप्रतियोगित्वं तस्येत्येकवचनसंगतिः ॥ त्वन्मते तु सजातीयस्य द्वितीयस्य पर्वतादेः सत्वात्तन्निष्ठभेदप्रतियोगित्वस्य सत्वात्तदसंगतिर्दुर्वारैवेति ॥ नच वृक्षैः च्छेदनार्थकत्वादवृक्षादित्यसंगतमिति उत्पाटनस्याप्यवयवविभागनांतरीयकतयाऽविरोधात् ॥ अत एव वृक्षाद्युत्पाटनेपि तादृशप्रयोगः ॥ एतेन वस्तुतस्त्वित्यादिकं निरस्तम् ॥ रंस्यथेत्यादिप्रयोगास्तु पूर्वोक्तरीत्या ऊह्याः । तेन भविष्यत्प्रयोगानुपपत्तिरिति दूषणमनवकाशम् ॥ यदपि मयेमा रंस्यथ क्षपा इति भगवद्वाक्ये इदं शब्देन ताभ्यः सर्वाः क्षपा दर्शितवानितोपि लीलाया नित्यत्वमन्यथा प्रातःकाले तादृशक्षपाणामभावात्तत्प्रदर्शनमनुपपन्नं स्यादिति विद्वन्मंडनपंक्त्युपरि तेनोक्तमिदंशब्दस्य बुद्धिस्थपरामर्शकत्वादिति तदप्यसंगतम् । इदंशब्दस्य बुद्धिस्थपरामर्शकत्वे तच्छब्देदंशब्दयोः पर्यायतापत्तिस्तस्मादिदंशब्दस्य प्रत्यक्षबुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्ने शक्तिरित्यन्यत्र विस्तरः ॥ एतेन (बुद्धिस्थरात्रिविहारस्याबाधितत्वात्सत्यसंकल्पताप्युपपन्ने)ति प्रलपितमपास्तम् ॥ बुद्धिस्थत्वेपि प्रत्यक्षबुद्धिविषयस्य बाधितत्वेन तदनुपपत्तेर्दुर्निवार्यत्वात् अत्रेदं प्रतिभातीत्यादिग्रंथस्य त्वयमभिप्रायः पूर्वोक्तश्रुतिस्मृतिभिर्लीलानित्यत्वे सिद्धे तत्र युक्त्या तद्वचनविरोधोद्भावनमकिंचित्करं शब्दस्य सर्वप्रमाणापेक्षया प्रबलत्वादन्यथा स्वर्गादिषु वेदैकप्रतिपाद्येषु स्वबुद्धिपरिकल्पितानुपपत्तिसहस्रस्य विद्यमानत्वात्तत्सिद्धिरपि न स्यात् ॥ एवमपि कृत्वा चिंतयोच्यते यथा चित्रपटस्थभगवल्लीलायां केनचिद्रसिकेन क्रमेण दृश्यमानायां सर्वस्यास्तस्यास्तत्कालिकत्वेपि तत्तल्लीलादर्शनकाले भाविदर्शनविषयायास्तस्या भावित्वानुभवो न तावता लीलाया भावित्वभूतत्वादिकं संभवत्येवमेव मायाच्छादितायां क्रमेणाविर्भविष्यत्यां लीलायामपि कुत्रचिद्भगवानेष्यति कुत्रचित्संगतो वियुक्तश्चेति भावित्वादयो दोषा भगवतः सर्वभवनसमर्थत्वादिति ॥ एवं च यत्वित्यादिना यदुक्तं तद्भगवत्स्वरूपाज्ञानादेव ॥ यदि च "यजमानप्रस्तर" इत्याद्युक्त्यायेन प्रत्यक्षविरोधाच्छ्रुतेरन्यार्थकल्पन एवाग्रहस्तदा" तत्वमसी" त्यादिवाक्यानामपि त्वंपदवाच्यस्याकर्तृत्वेनैवोपपत्तौ तत्र जहदजहल्लक्षणाप्रयासो विफल एव स्यात् ॥ एवं "रसो वै सः रसं ह्येवायं लब्ध्वानंदी भवती"ति श्रुतौ रसशब्दस्यानंदमात्रवाचकत्वं आनंदं लब्ध्वानंदी भवतीत्यर्थः स्यात् । स चैकस्मिन्कारणत्वकार्यत्वयोर्विरोधादसंगतस्तस्माद्रसः शृंगाररूप एव । तथा च सर्वरस इति मौक्तिकार्थपरमिति मिथ्यावादिनां व्याख्यानं हेयम् ॥ अन्यत्तूक्तं प्राक् ॥ इति चतुश्चत्वारिंशत्संदंशखंडनामासस्याभासत्वप्रदर्शनम् ॥ अथ तत्र त्वन्मतेपीत्यादेः पंचचत्वारिंशत्संदंशखंडनाभासस्याभासत्वं प्रदर्श्यते ॥ त्वन्मते

जन्यस्यापीश्वरेच्छया नित्यतायाः संभवेनेत्यादिकथनं त्वन्मताज्ञानात् ॥ नह्यस्मन्मते
जन्यस्येश्वरेच्छया नित्यत्वं कुत्रचित् प्रतिपादितम् । नच जन्मांतरमहर्षेर्व्यित्यादिना प्रति-
पादितस्य भक्तस्य नित्यलीलामध्यपातित्वांगीकारे जन्यत्वनित्यत्वमभ्युपेतमेवेति
वाच्यम् ॥ भक्तस्य जन्यत्वाभावात् ॥ अत एव जीवानां व्युच्चरणमेव नोत्पत्तिरि-
त्युक्तम् ॥ एवं च नित्यस्यैव भक्तस्येश्वरेच्छया लीलामध्यप्रवेश इति ॥ पूर्वपक्षस्तु
सद्भक्तभजनादिपराधीनोन्यां लीलां करिष्यनीत्यभिप्रायेण यथा च तस्याजन्यत्वाद्यप्रजन्यं
तत्तदनित्यमिति व्याप्तेर्लीलाया अनित्यत्वं स्यादिति ॥ किंच प्रतिपादिसंमतसिद्धांतानु-
रोधेन वादिकृतपूर्वपक्षस्यासंगतत्वप्रतिपादनमपि कथकसंप्रदायानभिज्ञत्वं द्योतयति
तथा सत्यनिर्वचनीयवादिनं प्रति प्रमाणादिसत्यवादिनः कथायां प्रमाणादिसत्वाभ्युपगम-
प्रतिपादकः पूर्वपक्षोसंगतः स्यात्तेन तस्य वाग्व्यवहारहेतुत्वाभ्युपगमात् पूर्वपक्षमात्र
स्यासंगतत्वैवं स्यात् । अत एवोत्तरपक्षोपीत्याद्यप्यसंगतम् ॥ त्वन्मतेपि मायाया दुर्घट-
घटनापटीयस्त्वमित्युक्त्यैव सर्वसमाधानसंभवेनानेकग्रंथरचनाश्रमो व्यर्थ एव स्यात् ।
सर्वस्य चानिर्वचनीयत्वस्वीकारेणैवोपपत्तौ तत्तल्लक्षणप्रणयनं परिभाषादिषु व्यर्थमेव
गौतममतदृष्टांतोप्ययुक्त इत्यप्यसंगतम् । त्वया आग्रहेन स्वीकृतैरेव स्वग्रंथेषु तन्मत-
दृष्टांतस्योक्तत्वात् । तदुक्तं पंचदश्यां चित्रदीपे—विक्षेपस्य स्वरूपं हि प्रारब्धक्षय-
मीक्षते ॥ उपादाने विनष्टेपि क्षणं कार्यं प्रतीक्षते ॥ इत्याहुस्तार्किकास्तद्वदस्माकं किं न
संभवेत् ॥ संततं दिनसंख्यानां तेनाद्यक्षण ईरितः ॥ भ्रमस्यासंख्यकल्पस्य योग्यः
क्षण इहेष्यतामिति ॥ यदि तदुक्तार्थप्रामाण्याभ्युपगंतृभिरेव तद्दृष्टांतेन वस्तुसिद्धिरूपे
येत्येव नियमस्तदा तद्वाक्यात्वन्मतस्थानां निश्चयो न स्यात् । कणभुगक्षचरणमतसंश्रि-
तानां च स्यात् । तस्मात्स हीत्यादिनोक्तमसंगतं यदपि तदैक्षतेत्यादि भूतप्रयोगानुरोधेन
भगवज्ज्ञानस्य नित्यता वक्तुमशक्येत्यूचे तत्रोच्यते तादृशप्रयोगानुरोधे नानित्यत्वसाधने
"सदेव सौम्येदमग्र आसीदात्मा वा इदमग्र आसी"दित्यादिवाक्यानुरोधादात्मसत्ताया
अप्यनित्यत्वादि कुतो न स्यादिष्टापत्तौ चात्मनोप्यनित्यत्वापत्त्यापसिद्धांतः स्यात् ॥
यदि "चाकाशवत्सर्वगतश्च नित्य" इत्यादि श्रुत्यनुरोधादात्मनो नित्यत्वमित्युच्यते
तदा "सत्यकामः सत्यसंकल्प" इत्याद्यनुरोधेन ज्ञानादीनामपि नित्यत्वमिति विभा-
वय ॥ केवलानुमानस्य श्रुतिसाहाय्यरहितस्याप्रामाण्यमित्यपि न किंचित् । तथा सति
पर्वतादौ धूमादिना वन्ह्यनुमानस्याप्रामाण्यं स्यात्तत्सहायश्रुतेरभावात् । इष्टापत्तौ धूम्र-
दर्शनोत्तरं वन्ह्यर्थिनस्तत्र प्रवृत्त्यनुपपत्तिरिति ॥ अनुमानस्य श्रुतिसहकृतस्यैव प्रामाण्ये
तस्य साधारणत्वापत्त्या प्रमाणांतरत्वानुपपत्तिश्च ॥ तदेव हि प्रमाणांतरं यदसाधारण-
सहकार्यासाद्यमनोबहिर्गोचरां प्रमां जनयति । अन्यथा दृष्टादीनामपि प्रमाणांतरत्वापत्तेः ॥
किंच लीलाया अनित्यत्वं स्वमतानुसारेणास्मन्मतानुसारेण वोच्यते । आद्ये क्रियाया इत्या-
द्युक्तो हेतुर्निष्फलः सर्वस्यैव त्वन्मतेऽनित्यत्वात् नापि द्वितीयः । अस्मन्मते तादृशहेतोः
स्वरूपासिद्धत्वात् । एतेन क्रियाया इत्यादि निरस्तम् ॥ यच्च सत आविर्भावे श्रमस्य
वैयर्थ्यमुक्तं सत आविर्भावस्यावश्यकत्वादित्यादिना तत्र सम्यक् । सतः स्वयमेवावि-

भावस्वीकारे त्वन्मते विमुक्तिसाधनप्रयासवैफल्य सत्यात्मकस्य ब्रह्मरूपतया स्वयमेवा विर्भावसम्भवात् ॥ अविद्यानिवृत्त्यर्थं तदिति चेदत्राप्यावरणनिवृत्त्यर्थं तस्य सफलत्व सम्भवात् ॥ ईश्वरेच्छाया तूक्त प्राक् ॥ वामनपुराणवाक्यस्थ भर्तृपद स्वामिपर तेन वामनपुराणेत्यादिना तत्कृतप्रलापोनवकाश । अयोग्यमिच्छन्पुरुष पततीति वाक्ये पात स्वाभिलषिता प्राप्तिर्दण्डादिप्राप्तिश्चेति लौकिकन्यायेनोक्त यथा शूद्रादीना तप आदिकरणे दण्डस्तपस्यत वने शूद्रमित्यादिनोक्त । अपि चेत्सुदुराचार इति कैमुतिकन्या येन भगवदुक्ते प्रशसा तेन अयोग्येत्यादिनोक्तस्य कुचोद्यस्य नावकाश ॥ यत्तु साधने प्रतिबन्धनिवृत्ताविल्यादिना टीकाकृदुक्तमनूद्य तत्र युक्तमित्यादिना सर्वस्य नित्यत्वेन प्रतिबन्धनिवृत्तेरयोगादीश्वरेच्छया सर्वत्र हेतुत्वेन तन्निवृत्तेरकिंचित्करत्वादित्युक्त तन्म दम् ॥ सर्वस्य कारणात्मना नित्यत्वेपि कार्यात्मना वर्तमानस्य निवृत्तेस्तिरोभावरूपाया उक्तत्वात् । ईश्वरेच्छाया अप्येतत्कारणेनैतद्भवत्वित्यादिरूपायास्तत्कारणसमवधान एव फलजनकत्वादित्यर्थस्यासकृदावेदितत्वाच्च साधनप्रयासस्य न वैयर्थ्यमिति 'ये यथा मा प्रपद्यन्त इति' वचन तु मर्यादामार्गविषय न पुष्टिमार्गविषयम् । तेन पुष्टिमार्गे मर्यादा त्यागस्यादोषत्वादित्यादि तत्कथनमज्ञानमूलकमेव ॥ यत्तु टीकाकारेणेत्यादिटीकाकारोक्त मनूद्य तन्नेत्युक्त्वा श्रुत्यादेर्गतेरुक्तत्वाद्वामनपुराणे सति विश्वासे व्यापिशब्दो यौगिको न तु रूढ्या विभुत्वबोधक पुराणेषु तस्योपरिदेशे निरूपणादित्युक्त तन्न युक्तम् । मध्वपरिदेशे निरूपण विभुत्वव्याघातक विभोराकाशस्योपरिदेशे सत्त्वेपि विभुत्वा व्याघातात् । अन्यथा "यदत परो दीप्यत" इत्यादिनोपरिदेशे ब्रह्मणो निरूपणस्य त्वत्सम्मतत्वात् तस्यापि विभुत्व न स्यात् ॥ किं च विश्वव्यापिन विश्वव्यापकमित्यादौ व्यापिशब्दस्य विभुत्वभिन्नयोगार्थादर्शनेन तादृशापूर्वयोगार्थकल्पने रूढ्यर्थस्य प्रसिद्धस्य त्यागे मानाभावश्च ॥ पृथिव्या दृश्यमानत्व च पृथिव्यवच्छेदेनाविर्भूतत्व तदपि विभुत्वप्रतिपादकमन्यथाऽसत आविर्भावासम्भवादर्शनानुपपत्ति तस्य भिन्नत्वस्वीकारे च—स्तम्भाभ्यन्तरगर्भभावनिगदव्याख्यातत्वैभवो य पचाननपाचन्यवपुषा व्यादिष्ट विश्वात्मताम् । इति त्वत्सम्मत तत्र चिरसुखप्रणीतश्लोकस्यासगति स्यात् । तत्रापि स्तम्भादाविर्भूतस्य भिन्नतया वक्तु शक्यत्वात् ॥ पुराणादिषु ब्रह्मणो विभुत्वेन प्रतिपाद नात्तत्त्वमिति चेदत्रैतेपि तुल्य सर्वेषा पुराणानां व्यासप्रणीतत्वेनैकत्र विश्वासोन्यत्र च नेत्यत्रापि दुराग्रहादतिरिक्त न किंचिन्नियामकमस्ति–एतेन पृथिव्या दृश्यमानस्येत्यादिक निरस्तम् ॥ इति पचचत्वारिंशत्खण्डखण्डनाभासस्याभासत्वप्रदर्शनम् ॥ अथ तत्र ध्रुव शाकौ हर इत्यादे षट्चत्वारिंशत्खण्डखण्डनाभासस्याभासत्व प्रदर्श्यते ॥ तत्र "ध्रुवासो अस्य कीरय" इति मन्त्रे ध्रुवशब्दस्य नित्यार्थकत्वाभावे तदन्यार्थशक्तत्वे हेतु प्रदर्शित मत्र यद्यदनेकार्थशक्त पद तत्तदेकार्थमात्रविषयकशाब्दबोधजनकमिति सामान्यतो मुखीव्याप्तिस्तेनाश्रयणीया । सा च गामानय सैन्धवमानयेत्यादिवाक्यघटकेषु गवादिपदे ष्वनेकार्थशक्तेषु सास्नादिमद्व्यक्तिलवणाद्येकमात्रविषयकशाब्दबोधजनकेषु व्यभिचारिता । तथा च तदुक्तहेतोर्न कार्यक्षमत्व किंचानेकार्थशक्तस्य पदस्यैकार्थविषयकशाब्दबोधाजन

…नित्यत्वानुपपत्तिः । तेषां तत्प्रमीकारे यानापि प्रशंसा प्रकरणे प्रवरणादीनामभिधानियामकत्वानुपपत्तिः । तेषां तत्प्रमीकारे चानापि प्रशंसा प्रकरणानित्यत्वे तच्छक्तिनियामकत्वसम्भवेन तन्मात्रार्थकत्वं गले पादुकान्यायेन सेत्स्यतीति ॥ किंच स्वयं श्रुत्यादिशब्दानामर्थमप्रदर्श्यैव परपक्षे दोषमुद्भावयन्नुपहास्यत्वादुपेक्ष्य । नित्यत्वं तु ध्वंसाप्रतियोगित्वं तच्च लीलामध्ये प्रविष्टे भक्तेऽविरुद्धमिति तस्यैव नित्यशब्दार्थाज्ञानेन भ्रान्तत्वं लीलामध्यपातस्तु भगवदनुग्रहादेवात एवाह्येत्युक्तं तदर्थस्त्वेतद्रसवधिनं सवधश्च भगवदनुग्रहविशेषरूप एव । स च येषु मोक्षेषु भवति तस्य लीलामध्यपात इष्ट एवेति ॥ एतेन देवानामपीत्यादिकं प्रत्युक्तम् "यथेह कर्मचित" इत्यादिवाक्यपर्यालोचनया यज्ञादिपरमिति । अन्यथा तु "प्लवा ह्येते अदृढा यज्ञरूपा" इत्यादिपूर्ववाक्यपर्यालोचनया… "यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनुं स्वा"मित्यादिनोक्तवरणस्यापि तद्व्यापत्तौ तत्फलस्यापि सातत्याभगवदनुग्रहादीनामपि कर्मचितो लोक इत्यादि श्रुतिविषयत्वे "यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनुं स्वा"मित्यादिनोक्तवरणस्यापि तद्व्यापत्तौ तत्फलस्यापि सातत्यापत्तेरभावादिति यदूचे तत्रापत्तेः ॥ टीकाकृदुक्तं किंचिदनूद्य पराक्रमितुमुक्त्वा आपत्तेरभावादिति यदूचे तत्रापत्तिः ॥ टीकाकृदुक्तं किंचिदनूद्य पराक्रमितुमुक्त्वा विष्णोर्जन्म तु तदाविर्भाव इत्युक्तईक्षणादिरूपाया अनुद्धारात्तदभावकथनं साहसमात्रं विष्णोर्जन्म तु तदाविर्भाव इत्युक्तं मसङ्गतं । यत्र प्रसिद्धार्थबाधस्तत्राप्रसिद्धार्थकल्पनं न्याय्यमेवातो जन्मशब्दस्योत्पत्तौ प्रसिद्धस्य भगवति बाधात्सुतरामेतस्यार्थान्तरकल्पनेऽपि न दोषः । अत एव "नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः" इति सूत्रे आत्मन औपाधिकं जन्मादि स्वीकृतम् । शारीरत्वे यदि चात्मनो नित्यत्वप्रतिपादकश्रुतिबलात्तथा कल्प्यत इति ब्रवीषि तदा विष्णोर्नित्यत्वप्रतिपादिका श्रुतिस्मृती किं न पश्यसि ॥ जन्मादिलीला त्वासुरव्यामोहनार्थं तेन तेषां तथा प्रतीतावपि न दोषः ॥ किंच भगवल्लीलाया यद्यनित्यत्वं स्यात्तदा तद्रसानुभवितुर्भक्तस्य मुक्तापेक्षयाधिक्यवर्णनं विरुध्येत । तथा चोक्तं व्यासे—"अतस्त्वितरज्ज्यायो लिंगाच्चेति" तदर्थस्तु अतः—तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः ॥ न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह ॥ अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विज ॥ इति भगवद्वाक्यसमूहात् इतरद्भगवदीयत्वं ज्यायः । तत्र हेत्वन्तरमपि लिंगादित्यनेनोक्तम् । मुक्तानां तु मायाविनिर्मुक्तात्मस्वरूपेणावस्थानं न तु भजनानन्दानुभवो लीलारसास्वादो वा देहेन्द्रियाद्यभावात् । भक्तानां तु तत्सर्वाद्युभयविधानन्दो भवतीत्यतस्तेषामाधिक्यं तदपि मायातत्कार्यरहितमतो भगवत्सेवोपयोग्यपि ॥ अत एवोक्तं न यत्र माया किमुतापरे हरेरनुव्रता यत्र सुरासुरार्चिता ॥ एवं च 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते'ति श्रुत्युक्तं फलं परप्राप्तिरूपं तस्य भवनात्युक्तमतस्तस्य परत्वेन वर्णनादपि नित्यत्वमत एव "तद्भूतस्य तु नातद्भावः" इति सूत्रमपि लीलानित्यत्वमेव प्रतिपादयति ॥ न च तत्सूत्रं ब्रह्मचारिणो नैष्ठिकस्य प्रच्युत्यभावं प्रतिपादयति । तद्भूतस्य ब्रह्मचर्यादिनोर्ध्वरेतोभूतस्य नातद्भावो न ततः प्रच्युतिर्नियमात् तद्रूपस्य प्रच्युतिरूपस्य अभावेऽभ्यविध्यभावादिरूपादिति चेन्मैवम् । तादृशार्थस्य ततो लाभात् तच्छब्दस्य प्रकान्तपरामर्शकत्वेन ब्रह्मचारिणो प्रकान्तत्वेन तादृशबोधासम्भवात् । किंच तस्य न प्रच्युतिर्विध्यभावादित्येतावतैव स्वदुक्तार्थस्य लाभसम्भवे तादृशभङ्ग्या कथनं निष्प्रयोजनं स्यात् ॥ किंच ब्रह्मचारिणः प्रच्युतौ न निषेधहेतुत्वम् । किंतु रागादीनामेवेति प्रच्युत्यभावे तादृशहेतोरप्रयोजकत्वं तस्मादेष

तस्यार्थ –तद्भूतस्य भवद्भक्तत्या भगवदीयत्व प्राप्तस्य नातद्भाव. न पुनः ससारे प्रवेश । एतेनानित्यत्व निराकृतम् ॥ अत्र विश्वासदार्ढ्यार्थं कैमुतिकन्यायेनाह–जैमिनेरपीति यदि कर्ममात्रनिरूपकस्येश्वरानगीकर्तुर्जैमिनेरपि कदाचिद्भगवत्कृपया तद्भाव स्यात्तदा तस्य नातद्भावस्तत्तिरोधान नेत्यर्थ । तत्र हेतुमाह नियमादिति ' सदा पश्यति सूरय" इत्यादिना भक्ताना सार्वदिकदर्शननियमात् । अथ भगवद्भावो मुक्तिरूप एव भविष्यतीति शका परिहारार्थमाह तद्रूपाभावेभ्य इति । मुक्तिरूपत्वाभाववोधकेभ्यस्ततोप्यधिकत्वे बोध केभ्यो 'मुक्तानामपि सिद्धाना नारायणपरायण ॥ सुदुर्लभ प्रशातात्मा'इति तथैव परया निर्वृत्याह्यपवर्गमात्यतिक परमपुरुपार्थमपि स्वयमासादित नैवाद्रियते । भगवदीयत्वेनैव परिसमाप्तसर्वार्था इत्यादिवाक्येभ्यस्तस्माल्लीलानुभवस्य सार्वदिकत्वेन प्रतिपादनाल्लीलाया नित्यत्वमेव व्यासाभिमतम् ॥ एव च तदज्ञानमूलको न चात्र लीलानित्यत्वबोधनस्य गधोस्तीति प्रलाप उपेक्ष्य ॥ किचेत्यादिना यत्तेनोक्त तदुत्तर पूर्वमेव प्रतिपादितम् । तथापि यक्षानुरूपो बलिरिति न्यायात्पुनरप्युच्यते । जगत सत्यत्व तु कारणात्मना लीलाया सत्यत्व स्वस्वरूपेणेति जगल्लीलयो सत्यत्वे विशेष । नहि योगिना लीला अप्रत्यक्षेत्येत तावता अनित्येति वक्तु शक्येति । त्वन्मते ब्रह्मणोपि योगिप्रत्यक्षविषयत्वेन तस्याप्यनि त्यत्वापत्ते यद्यद्योगिप्रत्यक्षाविषय तत्तदनित्यमिति व्यासस्यानगीकारात् ॥ ( जगद्योगिना सर्वदा प्रत्यक्ष लीला तु तेषामपीश्वरेच्छयैवेत सुतरामस्या अनित्यत्वमित्यपि बालभापि तम् । ईश्वरेच्छया प्रत्यक्षस्यानित्यत्वाप्रयोजकत्वात् । दशस्वध्रित्यादिभविष्यत्वभूतत्वप्रति पादकप्रत्ययाना नित्यविषये गतिर्भाष्यकृतैव प्रतिपादिता सापि पूर्वमुक्तैवेति किं पुन पिष्टपेषणेन ॥ यत्तु ( एकत्र कृतो निर्णयो नान्यत्रोपयोगी पृथिव्या गुडे माधुर्यनिर्णयेपि जबीरादौ तदभावादि ) त्युक्त तदपि तादृशन्यायतात्पर्यमबुद्ध्वैव । तदर्थस्तु एकस्मिन् प्रसगे यस्य नित्यत्वमनित्यत्व वा निर्णीत अन्यप्रसगेपि तस्य नित्यत्वेन सदेह किंतु स एव निर्णय उपयुज्यते न पुनर्निर्णय कार्य इत्यर्थ । यथा धूमे कदाचिद्व्याप्तिनिश्चये पुन पर्वतादौ धूमदर्शने स एव पूर्वं कृतो व्याप्तिनिश्चय उपयुज्यते न तु निर्णयान्तरम् । उपयोगस्तु स्वजन्यसस्कारद्वारा स्मारकत्वेनेति कृत पल्लवेन ॥ ( भक्तानुभवविपयस्य पारमार्थिकत्व तु विप्रतिपन्न ) मिति यदुक्त तत्र तदनुभवविषयस्यास्तु विप्रतिपत्ति "सदा पश्यति सूरय" इत्यादिना प्रतिपादितस्य सदा दर्शनस्य विषयानित्यत्वेऽनुपपत्त्या तन्नित्यत्वसाधकत्वात् ॥ इति षट्चत्वारिंशत्खडखडनाभासस्याभासत्वप्रदर्शनम् ॥ अथ तत्र तावल्लीलेत्यादे सप्तचत्वारिंशत्खडखडनाभासस्याभासत्व प्रदर्श्यते ॥ तत्र तान दित्यारभ्य पूर्वपक्षिणोऽभिप्राय प्रतीयत इत्यतग्रथेन ननु प्रभासलीलाया कथ सगति रिति पूर्वपक्षस्याभिप्रायस्तेन वर्णितस्स चासगत ॥ तत्र मायावादिन पूर्वपक्षित्वे त प्रति भगवान् हि सर्वलीलायुत प्रकट इत्यादिनोत्तरासगति स्यात् । तन्मते लीलायाम्त स्कार्यार्थत्वाभावेन यथेत्यादिदृष्टातासभवात् ॥ तस्मान्मायावादिनो नाय पूर्वपक्ष । एतदेव टीकाकारेण "वैधर्म्याच्च न स्वप्नादिव" दिति सूत्रानुरोधेन यदि मायिकत्व नांगीक्रियत इति यदुता प्रकटीकृत पूर्वपक्षाभिप्रायवर्णनारम्भे अन्यथा तन्मते

स्वसादिनैधर्म्यस्य मायिकत्वप्रयुक्तत्वाभावात्तथा यथाप्रसङ्गत स्यात् । तन्मते हि स्वाप्ना-गतिधोम्ताकालिकमाधर्माधिक्यमप्रयुक्त वैधर्म्यम् । अत एव भाष्यकृद्भिस्तृत-प्पाख्यायस्सरे वि पुनर्वैधर्म्यंवाधाबाधाविति मृग ॥ भाष्येत हि स्वप्नोपलब्ध-वस्तुप्रबुद्धस्य जागरितोपलब्धवस्तुस्वभावि यथाविद्वत्रावा भाष्यत इत्युक्तम् ॥ एव तदभिप्रायमनुक्त्वैव तद्दर्शित लीलाप्रतिपादकवाक्यानाम् । अथ रथानित्यादिवाक्यतुल्य त्वकथा प्रसादात् । यथा तत्र न "तत्र रथा न रथयोगा" सन्तीति रथादीना निषेधक वाक्यमुपलभ्यते तथा लीलानिषेधकवाक्याभावेनेन्द्रजालादितुल्यत्वस्य त्वदभिमतस्यासिद्धे तस्माल्लीलाया विग्रहात्मधर्मरूपाया प्रभासादिलीलानुरोधेनानित्यत्वमथवा पूर्वोक्तवा क्यानुरोधान्नित्यत्वमिति संदेहे अंशावतरणभारतादिवाक्यादिभिश्चानित्यत्वमेवेति भातीति पूर्वापरविरोध इति जिज्ञासो पूर्वपक्ष ॥ आसुराणा पूर्वपक्षे तु मौनमेव शरणम् । उत्त रस्य व्यामोहनिवृत्त्यर्थत्वे तथाविधव्यामोहस्य भगवदिच्छाप्रयुक्तस्य दुरुच्छेद्यतयोत्तरशतस्याप्य-निवर्तकत्वात् ॥ अत एवेश्वरमायामोहितत्वात्तेन श्रीकृष्णस्य शुद्धतुल्यत्व प्रतिपादितम् । युक्तमेवेदृशस्यैतत्प्रतिपादनम् । अवजानन्ति मा मूढा मानुषीं तनुमाश्रितम् ॥ पर भावमजानन्तो मम भूतमहेश्वरमित्यादिभगवद्वचनादेतादृशानामसुरत्व युज्यते-ये यथा मा प्रपद्यन्ते तांस्तथैव भजाम्यहमिति भगवदुक्तेर्यदि सर्वेषां मोहकत्व स्यात्तदैव दोषावसर स्यात्तस्मात्तत्कर्मसदृशफलदातृत्वात्र वैषम्यम् । अत एव भगवद्भक्ताना तद्रूपे नित्यत्व-निश्चय । लीलायामपि या या यद्यदर्थास्तत्र तत्र तत्तदर्थत्वनिश्चय असुराणां चास्माद्वि-परीत ॥ न च विनिगमनाविरह इति वाच्यम् ॥ भगवद्वाक्यस्यैव विनिगमकत्वादत एव—

महात्मानस्तु मा पार्थ दैवीं प्रकृतिमाश्रिताः ॥ भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥

एव च ये मामिति पदवाच्य उद्धारपितृतारन्छेदकत्वोपलक्षितरूपावच्छिन्ने भगवद्रूपे-ऽव्ययत्वभूतादित्वदाम्ना प्रतिपादितानाद्यनतत्व जानन्ति तस्मिन्नेव दामोदरलीला प्रस्तावे दर्शित यदपरिच्छिन्नताया अनन्तत्वं च ज्ञात्वा ये भजन्ते भगवत्स्वरूप यथा र्थ्यन जानन्ति दैवीं प्रकृति च श्रिता इति भगवता प्रतिपादितम् । ये च तत्स्वरूप मायिक तत्प्रतिपादकाना वाक्याना स्वप्नप्रतिपादकवाक्यतुल्यत्व भगवन्त च मानुष जानन्ति ते भगवदुक्तामासुरीं तनुमाश्रिता । अत एव मोघाशा मोघज्ञानाश्चेति । एव च भगवन्माया-मोहितस्य तत्र वाक्यश्रीकृष्णस्य शुद्धवन्मोहकत्वमित्यादिक प्रलाप उपेक्ष्य । किंत्वेवविध-स्यानुशोच्यत्वमेव ॥ किंचैन्द्रजालिकस्यापि गृहवृक्षाकाशादिगमनादिकर्म कुर्वत प्रति पत्नमिद कर्मासत्यमिदं च सत्यमित्यवदतोपि तत्तत्कर्म दृष्ट्वा विशेषज्ञा जानन्तीदमसत्य-मोहायमिदं नेति इतरे तु सर्वमेव सत्यमसत्यं वा जानन्तो मुह्यन्ति । एव च जननमरणादि लीला मायिका एवेति । अत एवोक्त श्रीशुके—राजन् परस्य तनुभृज्जननाप्ययेहा माया विडम्बनमवेहि यथा नटस्य ॥ सृष्ट्वात्मनेदमनुविश्य विहृत्य चान्ते संहृत्य चात्ममहिम्नो परत स आस्ते ॥ अस्यार्थ —हे राजन् परस्याक्षरात्परमस्य "ब्रह्मविदाप्नोति पर" मित्यत्र तथैव दर्शनात् । तनुभृता यादवादीना जननाप्ययेहा उत्पत्तिनाशचेष्टामायाविडम्बन माया नुकरणमवेहि । पर. नित्य लीलासंबन्धिना समागमगमने स्वमायया उत्पत्तिनाशत्वेन

प्रत्ययापत्तिः । तत्र दृष्टांतो यथा नटस्येति नटो यथान्यदन्यवत् प्रत्याययति । उत्तरार्धे नाधुना पूर्वोक्तपरत्वं दर्शयति । इदं जगदात्मना स्वस्वरूपेणैव सृष्ट्वा तदनु प्रविश्य निःस्य प्रलये संहृत्य स्वमहिम्ना यथा तिष्ठति तथैवाधुनाप्यास्त इत्यर्थः ॥ अत एव दारुके प्रत्यपि भगवतोक्तं—त्वं तु मद्धर्ममास्थाय ज्ञाननिष्ठ उपेक्षकः ॥ मन्मायारचनामेतां विज्ञायोपशमं व्रजेति ॥ एतां सन्निहितामित्यर्थः । यत्तु ( अनन्यमनस्त्वेन भजनं स्वगतभेदमंगीकुर्वतस्तेन सभवति स्वगतभेदस्त्वेऽभेदोक्तेर्यांचोयुक्तिमात्रत्वा ) दित्याद्यूचे तदप्यज्ञानात् । अनन्यमनस्त्वं हि विषयविमुखमनस्त्वम् । आनन्दमात्रभगवदेकमनस्त्वं वा भगवत्स्वरूपस्य विकारित्वादीनामनंगीकृतत्वाद्य विकारस्येत्याद्यपि निरस्तम् । यदपि यस्येत्यादिना टीकाकृदुक्तं मोहनमपि स्वरूपसाध्यमित्याद्यनूद्य तत्र युक्तमित्युक्त्वा स्वरूपपदेन श्रीकृष्णात्मनो ग्रहणे तद्देहस्य ग्रहण इत्यादितन्मायामोहितेनोक्तं तदपि तुच्छम्—आनंदमात्रकरपादमुखोदरादीत्यादिनोक्तस्य श्रीकृष्णस्यानंदमात्रस्वरूपस्य देहाद्यनात्मकत्वात्तत्र देह उच्यते आत्मा चेति शंकाया अनुदयानात् । तत्र तादृशानंदस्वरूपस्यैवासच्छब्दवाच्यत्वं देहादिभानं त्वासुराणामेव । अत एवोक्तं—अवजानंति मां मूढा मानुषीं तनुमाश्रितम् ॥ यदप्युक्तं ( अस्मच्छन्दस्य शरीरवाचित्वे मानाभावो मम शरीरमिति प्रत्ययाच )ति तदप्यसत् । ममात्मा अहं गौरोऽहं दुःखीत्यादिप्रतीत्यनुरोधेन देहादीनामप्यसच्छब्दवाच्यत्वस्य स्वीकरणीयत्वादन्यथात्मनि स्वसंबंधगौरत्वादीनामसंभवेन तादृशप्रतीतेर्भ्रमत्वापत्तिः ॥ नच तत्र भ्रमत्वमेवांगीक्रियत इति वाच्यम् । एवं सति मम शरीरमिति प्रतीतेरपि प्रमात्वं दुरुपपादमेव । नह्यसच्छब्देनात्मनो ग्रहणेपि देहेन सह तस्य संबंधः संभवति सदसतोः संबंधानिरूपणात् ॥ किंचात्मनः संबंधस्वीकारे तस्यासंगत्वहानिः ॥ न चाध्यासिकसंबंध इति वाच्यम् ॥ तादृशसंबंधस्वीकारे भ्रमत्वमेव गले पादुकान्यायेन सिद्ध्येत् ॥ एवं च प्रतीतेस्तुल्यत्वाच्छरीरादीनामप्यस्मच्छब्दवाच्यत्वमभ्याहतम् ॥ किंच यदि अस्मच्छब्देन शुद्धात्मनो ग्रहणमभिमतं तदा विद्यारण्योक्तिविरोधः । तथा चोक्तं तृप्तिदीपे—एको मुख्यो द्वावमुख्यावित्यर्थस्त्रिविधो ह्यमः ॥ अन्योन्याध्यासरूपेण कूटस्थाभासयोर्वपुः ॥ एकीभूय भवन्मुख्यस्तत्र मूढैः प्रयुज्यते ॥ एवं च मुख्यार्थस्यैव वाच्यत्वात् तत्त्यागेऽमुख्यार्थस्य वाच्यत्वकल्पने तद्वचनविरोधो दुर्वार एवेति ॥ यत्तु ( व्यासशुकादीनामपि त्वयाऽसुरत्वं वाच्यं यतस्तैरपि तथा ज्ञातं अज्ञातत्वोक्तेरसभवा ) दित्यूचे तदप्यज्ञानात् । नहि व्यासशुकादीनां भगवल्लीलायां भगवतो वा अनित्यत्वज्ञानमित्यत्र प्रमाणमस्ति । वर्णनं तु यथा भगवताऽसुरव्यामोहार्थमाचरितं तथैव तैरपि तदिच्छानुसारिभिः कृतमिति न कोपि दोषः ॥ अत एव भागवतश्लोकेषु भक्तानां श्रीकृष्णतत्संबंधिलीलादीनां नित्यत्वप्रतिपादकत्वप्रतीतिस्त्वादृशानामन्यार्थप्रतिपादकत्वप्रतीतिः । एवं च तैरपीश्वरानुरोधिभिरासुरव्यामोहार्थमेव तथा वर्णितम् ॥ एतेन किंचेत्यादिकं निरस्तम् ॥ यथा तद्वर्णनस्य नित्यलीलाप्रतिपादकत्वं तथा दर्शितमाचार्यैः सुबोधिन्यां ग्रंथगौरवभयान्नात्रोच्यते ॥ किंच ब्रह्मांडपुराणेप्युक्तं—अमोहाय गुणा विष्णोराकारश्चिच्छरीरता ॥ निर्दोषत्वं तारतम्यं मुक्तानामपि

बोच्यते ॥ एतद्विरुद्धं यत्सर्वं तन्मोहायेति निश्चयः । नच सामान्यतो मोहायेत्युक्तं
न त्वासुरव्यामोहायेति तत्कथमासुरमोहायैवेति निश्चय इति वाच्यम् ॥ अन्यत्र
स्पष्टतया तथैव प्रतिपादनात् ॥ तथा चोक्तं ब्रह्मपुराणे–असत्वं पारवश्यं च
विधिभेदादिकं च यत् ॥ तथा प्राकृतदेहत्वं देहत्यागादिकं तथा ॥ असुराणां
विमोहाय दोषा विष्णोर्न हि क्वचित् ॥ नच तत्रासुरपदेन रावणादीनां ग्रहणं तथा
चासुराणां रावणादीनां देहत्यागादिकं विमोहाय तन्मोहापगमायेत्यर्थ इति वाच्यम् ॥
प्रकरणविरोधात् असत्वपारवश्यत्वप्राकृतदेहत्वादीनां मोहापगमाहेतुत्वाच्चेति ॥ ननु–
यदिदं मनसा वाचा चक्षुर्भ्यां श्रवणादिभिः ॥ नश्वरं गृह्यमाणं च तत्सर्वं विद्धि
मायिकमिति भगवद्वाक्याद्दृश्यमात्रस्य मायिकत्वे सिद्धे कथं लीलाया न मायिकत्व-
मिति चेन्मैवम् ॥ सर्वस्य मायिकत्वप्रतिपादने नश्वरमिति व्यर्थं स्याद्गृह्यमाणमित्यनेनैव
सर्वसंग्रहसंभवात् । तस्मादासुरव्यामोहार्थानामेव यदुकुलनाशादीनां सन्निहितानामि-
दंपदेन परामर्शः ॥ एवं चेश्वरस्य देहादिकमेव नास्ति किंतु चैतन्यानंदरूपं स्वस्वरूपं
प्रकाशयति । उक्तं च ब्रह्मांडपुराणे–स्त्रीपुंभावानुषंगात्मा देहो नास्य विजायते ॥ किंतु
निर्दोषचैतन्यसुखनित्यां स्वकां तनुम् ॥ प्रकाशयति सैवेयं जनिर्विष्णोर्न चापरेति ॥
नन्वस्य वाक्यस्य न नित्यं स्वरूपं प्रकाशयतीत्यर्थः । किंतु प्रवाहानादिरूपां तनुं दर्शयतीति
तत्संबंधस्तु तस्य मायिक एवेति चेन्न ॥ नित्यशब्दस्य प्रवाहानादिवाचकत्वे त्वन्मते
संसारस्य मायायाश्चानादितया नित्यः संसारो माया च नित्येत्यादिप्रतीतेः प्रामाण्यापत्ति-
स्त्रीपुंभावात्मकदेहस्यापि प्रवाहरूपेणानादितया मायिकसंबंधाश्रयतया तन्निषेधासंगतिश्च ॥
तस्मात्तादृशव्याख्यानं कुर्वन्नुपेक्ष्य एव ॥ ननु–भूभारः क्षपितो येन जहौ तच्च कलेवर-
मित्यादिना स्पष्टदेहत्यागः स कथमपलपितुं शक्य इति चेन्मैवम् ॥ भूभारहर्तृदेहस्या-
सुरव्यामोहार्थं त्यागेपि चिदानंदमयरसरूपस्य लीलाकर्तृस्वरूपस्य न त्यागः । तथा च
स्वस्मिन् प्राकृतत्वादिकस्यासुराणां ज्ञापकं यद्रूपं तस्यैव त्यागो न तु मूलरूपस्य वा
व्यूहरूपस्य वा ॥ व्यूहमूलरूपयोर्भेदश्च स्वयमेव दर्शितो वृष्णीनां वासुदेवोस्मीत्या-
दिना ॥ एवं च जन्मलीलाप्रमाणलीला चासुरव्यामोहार्था देवादीनामपि विस्मयोत्पत्त्यर्था
च । तथा चोक्तं–देवादयो ब्रह्ममुख्या निविशंतं स्वधामनि ॥ अविज्ञातगतिं कृष्णं ददृशु-
श्चातिविस्मिताः ॥ तथा च नेत्रनिमीलनेन देवानां ज्ञानशक्तिं तिरस्कृत्यात्मसंयोगेनेम
बहिःस्थितमेव स्वस्मिन् विलाप्यावरणाभिमुपनिषदुक्तां परमात्मस्थानभूतामधिदिष्ट्यां
प्रकटीकृत्य तस्मिन् स्वयमंतर्भूय पूर्वप्रतिपादितं स्वनित्यलीलास्थानमाविर्भावितम् तत्र
भागवताभिप्रायः ॥ तथा चेतादृशलीलाया अपि नानित्यत्वं प्रतिपादयितुं नटपात्र एव
नटदृष्टांतोपन्यासः ॥ यथा मत्स्यादिरूपाणि धत्ते जह्याद्यथा नटः । इत्यादिना तत्रैव
प्रदर्शितः । यथा नटस्य स्वर्गगमनं युद्धं च तेन युद्धेन मरणं पुनर्योधनादिकमपुरंध्राणां
सर्वं मायिकं ज्ञायत एवं लीलानित्यत्वबोधकभगवत्स्वरूपस्य च नित्यत्वबोधकप्रमाणेन
जननादिलीला मायिकीति ज्ञायते । एवमुपासनादिलीला । अत एव यत्तादृशांशादिकस्य
श्रीकृष्णस्य जीवत्वमुपासनस्य कृतत्वादित्याद्युक्तिरनादरणीया ॥ यत्तु ( भगवतो

भानानुपपत्तेश्च भानागीकारे च "नाभाव उपलब्धे"रित्यादिव्याससूत्रविरोधादी )ति तन्मदम् । असत्यालीलाया भानानगीकारात् । नहि विज्ञानादिवदस्माभिरसत्व तस्या स्वीक्रियतेऽनिर्वचनीयत्व वा येन तत्सूत्रविरोधोऽस्मन्मते स्यान् । किंतु त्वन्मत एव त्वया त्रैकालिकनिषेधप्रतियोगित्वरूपासत्वस्य सर्वत्र स्वीकारात् । अस्माभि शुक्तौ रजतप्रतीतिस्थलेपि नासत्ख्यातिरनिर्वचनीयख्यातिर्वा स्वीक्रियते किंत्वन्यथाख्यातिरेवेति तत्स्वरूप तु प्रकाशादिषु विस्तरतो निरूपित ग्रथगौरवभयान्नेह निरूप्यते ॥ सूत्र तु विज्ञानवादिमतखण्डनाय तत्सदृशानामन्येषा च खण्डनाय प्रवृत्त तेन विज्ञानातिरिक्त प्रपचो नास्तीत्यगीकृतम् । अन्यैरपि प्रपचस्यासत्वमगीकृत तथा च न प्रपचस्याभाव इति वक्तु शक्यते । कस्मादुपलब्धे । उपलभ्यते हि प्रपच । अयमभिप्राय विज्ञानवादिना विज्ञान साकारमगीक्रियत तत्र तत्सर्वाकार यत्किंचिदाकार वा प्रथमे ग्राह्यग्राहक सविंत्तिवत्सर्वानेव प्रकाशयेत् द्वितीये त्वेकमेवाकार सर्वदा प्रकाशयेच्चेतर तस्मात्तत्तदा कारप्रतीते कादाचित्कत्वोपपत्तये बाह्यार्थस्यापि सत्वमुपेयम् । तथा च कथ बाह्यार्था सत्वम् ॥ न च सहोपलभनियमादनतिरिक्तत्व बाह्यार्थस्येति वाच्यम् ॥ सहत्व हि द्वयोर्भिन्नयो पदार्थयोरकदेशावर्तित्वमेककालवृत्तित्व वा वाच्यम् । तत्र द्वित्व ज्ञानार्थ योर्भेद विना न सभवतीति भेद एव घट्टकुटीप्रभातन्यायेन सिध्यदिति ॥ तस्मादसत्व वादिनस्तव मत एव तादृशसूत्रविरोध । यदपि ( व्यामोहायेति तु न सगत तादृशभक्त स्याव्यामोहनीयत्वा ) दिति तदपि पूर्वोक्तासुरपदमदृष्ट्वैव । तत्रासुरव्यामोहाय प्रदर्श्य मानानामेवार्थाना यदिदमित्यादिना कथनादित्युक्तम् । एव च यथा कश्चिद्वटो मायिक मात्रादिकमितरजनव्यामोहाय कृत स्वमित्र प्रतीद मायिकमिति जानीहीति वदति तस्य वाक्य श्रुत्वा च तन्मित्रस्य न व्यामोह । किंतु तत्वज्ञानमेवैवमुद्धवस्यापि भगवद्वाक्येन न व्यामोह । किंतु तदपगम एवेति तत्रापि तादृशलीलाया भक्तस्य वैराग्य जायत इति मायिकत्व पुराणष्विति वाक्यमपि न विरुद्ध्यते ॥ वस्तुतस्तु तादृशवाक्य ससारस्य मायि कत्वप्रतिपादकपुराणवाक्यपरम् । एतन मायिकत्व पुराणेष्वित्यादिक निरस्तम् ॥ तद्वा क्यस्यैतद्विषयत्वाभावात् ॥ हसगीतवाक्यमपि गुणसृष्टिविषयम् । न सदेवेत्यादिवाक्योक्त सृष्टिविषयम् । त्रिधा गुणकृतो विसर्ग इति । तत्र वाक्यस्वारस्यानुरोधात् ॥ नच सृष्टि द्वयकल्पने मानाभाव इति वाच्यम् ॥ तादृशवाक्यस्यैव प्रमाणत्वात् ॥ किंच त्वन्मतपि—ईश्वरेणापि जीवेन सृष्ट द्वैत द्विधोच्यत इत्यादिना निरूपिते सृष्टिद्वये कि मानमिति वक्तव्यम् । नहि वेदे द्विधा सृष्टिर्निरूपिता येन तत्र प्रमाण स्यात् । नच जीवसृष्टि रीश्वरसृष्टितो न भिद्येति वाच्यम् ॥ अबाधक साधक च द्वैतमीश्वरनिर्मितम् ॥ अपने तुमशक्य चेत्यास्ता तद्विप्यते कुत ॥ जीवद्वैत तु शास्त्रीयमशास्त्रीयमिति द्विधा ॥ इत्यादिनोक्तनिवर्त्यत्वानिवर्त्यत्वरूपविरुद्धधर्मयोरेकत्रासभवेनाभेदस्य वक्तुमशक्यत्वाद न्यथा तन्निवृत्तौ तस्यापि निवृत्त्यापत्तिरिष्टापत्तौ चापनेतुमशक्यमिति प्रतिज्ञाविरोध इति दिक् ॥ किंच सर्वस्य जगतो मिथ्यात्व यदि तादृशवाक्योक्तमनोविलासत्वदृष्ट त्वादिहेतुभि प्रतिपाद्यते तदा—यदिद मनसा वाचा गृह्यतेऽन्यैरपाद्रिय ॥ अहमेव न

मत्तोऽन्यदिति युध्यध्वमंजसेति हंसवचनविरोधः। नहि मायिकस्य भगवदनन्यत्वं संभवति
तस्यासत्वात्। सदसतोश्च परस्परं विरुद्धयोरैक्यासंभवात्। नहि शुक्तिरजतयोरभेदः
संभवति। अन्यथा नेदं रजतमिति बाधस्याप्रामाण्यापत्तिः। तथा च तदभेदस्वीकारे
जगतः सत्यत्वं। स्वस्वरूपस्य मिथ्यात्वं वा स्यादिति भगवत्स्वरूपाभिन्नजगतः सत्यत्वं
मायिकस्य मिथ्यात्वं स्वीकार्यमिति विषयभेदस्यावश्यकत्वान्नानुपपत्तिः॥ एतेन
मिथ्यात्वेपि स्वाभिन्नत्वस्योपपत्तिरप्युक्तैवेति प्रलपितमपास्तम्॥ तदुक्तेः पूर्वविस्तरेण
खंडितत्वाच्च॥ ननु—न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः॥ सत्वं
प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैरिति भगवदुक्तेर्न त्रिगुणसृष्टेर्व्यतिरिक्ता सृष्टि-
रस्तीति चेन्न॥ तत्र सृष्टिवाचकपदाभावात्॥ किंच तद्वाक्यं त्वदभिमतविशुद्धसत्व-
प्रतिषेधकं मिश्रितसत्वव्यतिरिक्तं सत्वं नास्तीति बोधयति। तथा च—सत्वशुद्धि-
विशुद्धिभ्यां मायाविद्ये च ते मते। इति प्रवादो निर्मूल एवेति ध्वनितम्॥ न च सत्वपदं
जीववाचकमेवेत्यत्र प्रमाणमस्ति। एवमन्यत्रापि द्विविधा सृष्टिः—पटो यथा तंतुवि-
तानसंस्थ इत्यादिना भगवदवस्थाविशेषरूपां सृष्टिमुक्त्वा मामयं वेद स वेद वेदमित्या-
दिना गुणसृष्टिः प्रतिपादिता॥ एतेन किंचेत्यादिकमपास्तम्॥ यत्तु निरीश्वरसृष्ट्यंगीकारो-
नुचित इत्युक्तं तदप्यज्ञानात्। गुणसृष्टावपीश्वरेच्छाया हेतुत्वेन तत्रेश्वरस्य न हेतुत्वमिति
वक्तुमशक्यत्वात्। गुणसृष्टेरप्यनुवाद एव स्वप्नादिवत्। अनुवादस्तु प्रपंचार्थः। एतेन
नहि दूषणायेत्यादिदूषणमनवकाशम्॥ इति सप्तचत्वारिंशत्खंडखंडनाभासस्याभासत्व-
प्रदर्शनम्॥ अथ तत्रास्वकुलमिति पदच्छेद इत्यादेरष्टचत्वारिंशत्खंडखंडनाभासस्या-
भासत्वं प्रदर्श्यते॥ तत्र संजह्रे स कुलं विभुरित्यादि श्लोकेषु मायिकलीलानित्यलीला
मिश्रिता। तत्रापि भक्तानामिदं मायिकलीलाप्रतिपादकं वाक्यमिदं च नित्यलीलाप्रतिपा-
दकवाक्यमिति विवेकेन प्रतीतिरास्ताम्॥ पामराणां तु नित्यत्वरूपेण प्रतीतिरेवं
स्थितेऽनित्यत्वप्रतिपादकवाक्यानुरोधेनास्वकुलमिति पदच्छेदः मायिककुलस्य स्वकीय-
स्वाभावात्। अत एव तस्य भूभाररूपत्वेन वर्णनं संगच्छते॥ न चास्वकुलमिति
पदच्छेदे गौरवमिति वाच्यम्॥ गौरवं तत्तच्छास्त्रज्ञानप्रयुक्तं वा स्वरूपप्रयुक्तं वा नाद्यः
विरुद्धार्थं इष्टापत्तिं कृत्वा गौरवभिया पदच्छेदास्वीकारे बहुविरुद्धापत्तिः "सुपां सुलुक्
पूर्वसवर्णाच्छेयाडाड्यायाजालः" इत्यादिसूत्रेष्वपि आधात् इत्यादिपदच्छेदो गौरवभिया
न स्यात्। अत एव द्वितीयोपि निरस्तः॥ किंच पूर्वरूपपररूपादिविधायकशास्त्राणां
विपरीतार्थप्रत्यायकत्वं च स्यात्। संहर्तुमैच्छत् कुलमित्यत्र कुलपदस्य कुलत्वेन
रूपेण स्वकुलान्यकुलयोर्बोधकत्वात्। पूर्वमकुलमिति पदच्छेदेपि नैकवाक्यत्वहानिस्तथा
बाल एवेत्यादिनोक्तोपष्टंभासंगतिः। स्वकुलभिन्नत्वं तु मायिकत्वेन मायिकपदार्थैः सह
संबंधाभावात्। नैतावता तस्य कुलस्यान्यदीयत्वं संभवति। अत एव संजह्रेऽन्यकुलमिति
नोक्तम्। मायिकामायिकयोः साम्यासरप्रतिपादकपदस्यापि साम्यता॥ यथा सद्दर्शने
सहृदयानां विवेकेन प्रतीतिरेवं तत्पदश्रवणे सतामन्यकुलमिति प्रतीतिरासुराणां स्वकुल-
मिति प्रतीतिरत एव गूढत्वं तस्य फलं स्यासुरव्यामोहनमेव। एतेन फलाभावादिति

प्रत्युक्तम् । एव च ईश्वरस्य य्र् कर्तव्यस्थितकृत्यशेष इत्यादिना प्रतिपादितं तदेव सपाद-यितु निगूढता कृतेति ॥ यत्तु सर्वोदय पदमगादिति तु सत्य ब्रह्मणो यस्मात्तमित्या दिश्रुत्या पल्व्याप्त्यराभावे तद्गमने तथोक्त्युक्तरादिनि तदपि न सम्यक् । ब्रह्मण सर्वव्यापकत्वेनागादित्यस्यामगत्यापत्ते । किंच इन्धातो पल्व्याप्त्यरमर्थावृत्तिव्याप्त्यरत्व वा नाद्य द्रष्टव्य इत्यान्रेसमगत्यापत्ते । द्वितीये तु सर्वोदयमित्यादिना त्वदुक्तेरसङ्गनि रम्मन्मते तु सर्वेभ्यो दर्शपौर्णमासावित्यादिवत् प्रोक्तसर्वलोकादयपदमगादित्यर्थ । लौकिक्या भूमेर्मायिकलीलाधिष्ठानत्व उपयोगो न तु नित्यलीलाधिष्ठानत्व इत्युक्त प्राक् ॥ एतेन ( परमेश्वरतल्लील्योर्लौकिकाधिष्ठितत्वप्रसगा ) दित्यपास्त मायिकाधिष्ठान त्वदोषाभावान् नित्यलीला तु वृदावनाद्यलौकिकभूम्याश्रयैवेति ॥ यत्तु ( लीलोपयुक्ता नामपि प्राप्तशापाना मायिकत्वे लीलाया अपि मायिकत्वमापद्येत । एव बलदेवादीनामपि तथात्व स्या ) दित्यादिप्रलपित तत्रोच्यते । नित्यलीलामाविर्भावयता भगवताऽऽसुरव्या-मोहार्थं क्वचिन्मायिकी लीलापि प्रदर्श्यते । तदज्ञान च नित्यलीलाया अज्ञानेन भवति । तच्च न भक्ताना तेषा सदा तज्ज्ञानवत्वात् । कदाचिदज्ञानेपि न तेषा मोह यथा नट चर्याभिज्ञाना तन्माया पश्यतामपि न मोह इतरेषा तु भवत्येव । एवमेव प्रकृतेपि यथा नट स्वपुत्र मारयित्वा स्वय स्वकीय शिरश्छित्वा मृतो भवति लोकाश्च तथैव जानति नैतावता तस्य पुत्रो मृत स्वय वा किंतु मायिकावेव तौ मृतौ । एव यादवकुलनाशोत्तर स्वस्यापि तथा दर्शनेपि न स्वस्य यादवकुलस्य वा नाश । यथा तादृशनटचर्याया मायिक त्वमेव शापादिलीलाया मायिकत्वेपि न नित्यलीलाया मायिकत्वम् । माया च भगवत सामर्थ्यविशेष ॥ अत एवोक्त "पराऽस्य शक्तिर्विविधैव श्रूयत" इति । मायिकत्व तु पुनर्भक्ताना तथैव दर्शनसभवान्निश्चीयते ॥ मायिकत्वादितात्पर्यवच्छाखादेरेव मायिक त्वप्रयोजकमिति तु बालभाषित नटदर्शितस्वहननादेर्मायिकत्वानुपपत्तेस्तत्र मायिकत्व तात्पर्यवच्छाखादेरभावात् शुक्तिरजतादेरपि मायिकत्व न स्यात्तद्बोधकशास्त्राभावात् । यत्तु ( तत्र प्रश्नपरतयोपन्यस्तवाक्यस्य तु ब्रह्मण्यत्वादिविशिष्टत्वेन शापायोग्याना कथ शाप इत्येव तात्पय न तु कुलातरसत्वे राज्ञस्तज्ज्ञान ईदृशप्रश्नानुपपत्ते ) रिति तन्मदम् । न तु वय राज्ञस्तादृशतात्पर्य ज्ञान चेति ब्रूमो येन त्वदुक्तानुपपत्ति स्यात् । किंतु राजकृत प्रश्नव्याजेन व्यासैर्यादवकुल शापायोग्य शापयोग्यान्निकमिति ध्वनितम् ॥ अत एवाग्रे कालात्मना निसृष्टा मुनय इति प्रतिपादित त ॥ एवं च राज्ञस्तदज्ञानेपीत्यादि निरस्तम् ॥ किंचेत्यादिना यदुक्त ( कुलसहारेच्छया तत्सहारे तेनैवासुरमोहसिद्धा निर्मूल कुलान्तर कल्पन ) मिति तदपि तदा युज्येत । यदि आसुरमोहवद्भक्तानामपि मोह कृत्यशेष प्रतिपाद्य स्यात् । नहि नटेन लोकाना विस्मयरसोत्पादनार्थं स्वपुत्रो हन्यते तद्धननेपि विस्मयरसोत्पत्तेरव्याहतत्वात्तत्रापि पुत्रान्तरकल्पन तद्गमनस्य वा मायिकत्वकल्पन निरर्थकमेव स्यात् । तस्मादासुरमोहभक्ता मोहोभयकार्यसिद्ध्यर्थं कुलातरकल्पनमावश्य कम् ॥ स्थितकृत्यशेष इत्यस्य स्थित स्वकुलसहारलक्षणस्य कृत्यस्य शेष इत्यर्थस्तु न सत् स्वकुलसहारस्य लोकविरुद्धत्वात् । नहि लोकानुसारिणा त्वया लोकविरुद्धार्थं कल्पनीय

इति ॥ यदपि टीकाकृदुक्तं द्वयाद् प्राजापत्या इत्यादिनोक्तमनूद्य तत्र युक्तमित्युक्त्वा दृष्टांत एकस्मिन्निंद्रिये वृत्तिभेदस्यैवांगीकारेणेंद्रियद्वयानंगीकारादित्युक्तवान् । तन्नेंद्रियद्वयानंगीकारेपि नाम्नामात्रभेदः वृत्तिद्वयस्यैव दृष्टांतत्वसंभवात् ॥ किंच जिह्वायां यथा वा रसनं वागिंद्रियं च तथैव कल्पनीयम् । अयं दृष्टांत एकस्मिन् द्वयसत्वे । वस्तुतस्तु नटपुत्रे यथा मायिकः पुत्रस्तथैव तरुले मायिकं कुलम् । यथा तद्धननेन न पुत्रहननं किंतु सामाजिकमोहमात्रमेवं मायिकयादवकुलस्यस्वरूपनाशेपि न वास्तवकुलनाश एतदेव वैदग्ध्यं द्योतयितुं यथा नट इत्युक्तं प्राक ॥ एतेन ( तत्र कुलशब्देन यद्यस्थूलस्य कस्यचिद्ग्रहणं तर्हि शस्त्रपाताद्यसंभवो यदि स्थूलस्य कस्यचिद्ग्रहणं तदेकत्रोभयस्थितिरयुक्ते ) ति प्रत्युक्तं शस्त्रपातादीनामपि मायिकत्वात् । भूतावेशन्यायोपि सत्ये मायिकस्य स्थितिमात्र एवोपपन्नो न स्थूले । स्थूलस्य स्थितौ एतदेव-भूभारराजपृतनां यदुभिनिरस्येत्याद्युक्त्वा-यत्यादवं कुलमहो अविषह्यमास्त इत्यादिना व्यासेन दर्शितं मायिकानामेव भूभारत्वं ननु लीलास्थानामिति ॥ अत एव-इंगितज्ञा पुरप्रौढा एकारामाश्र सारताः ॥ सारतामृषभं सर्वे भूतावासममंसत ॥ इत्यादिना तेषां स्वरूपमुक्तम् ॥ यदपि यचेत्यादिना ते किं सर्वे उत केचिदित्युत्तरार्द्धेनैवानिकोक्तेत्याद्युक्त्वा तदपि न युक्तमित्यनेन स्वप्रौढिं दर्शयित्वा शूद्रा मंदभाग्या ये मनुष्यत्वेपि वेदानधिकारिण इति यद्धेतुहेतुमद्भावबोधनादित्यूचे तदपि न साधीयः । तत्र हेतुहेतुमद्भावस्य स्वदभिमतस्यावाक्यनिरूपणत्वेन दृष्टांतासिद्ध्या दार्ष्टांतिकासंभवात् ॥ तथा हि तत्रोद्देश्यविधेयमहिम्ना हेतुहेतुमद्भावे कल्पनीये शूद्रा । मंदभाग्या इत्यस्यैव हेतुवाचकत्वं वेदानधिकारे कल्पनीयम् । तत्र शूद्रत्वमंदभाग्यत्वयोस्तृणारणिमणिन्यायेन स्वतंत्रतया हेतुत्वं विशिष्टस्य वा । नाद्यः शूद्रत्वाभाववति चर्मकारादौ वेदानधिकारस्य सत्वेन व्यभिचारापत्तेर्नहि तेषां शूद्रत्वं तेषामंत्यजमध्ये गणितत्वात् । एवं मंदभाग्यत्वस्य श्रेष्ठिवणिजादौ सत्वेपि वेदाधिकारसत्वाद्व्यभिचारो बोध्यः ॥ न च वेदानधिकारिणि मंदभाग्यत्वं विजातीयमेव । तत्र । वणिजादाविति न व्यभिचार इति वाच्यम् ॥ तादृशवैजात्यस्य वेदानधिकारप्रयोज्यत्वेऽन्योन्याश्रयप्रसंगात् ॥ नापि द्वितीयः । विशिष्टस्यांत्यजादावभावेन व्यभिचारस्य तदवस्थत्वात् । विनिगमाविरहेण मंदभाग्यत्वविशिष्टशूद्रत्वस्यापि कारणत्वसंभवे गौरवाच्चेति । तस्मात्तादृशवाक्यानां न कारणत्वबोधकत्वम् । किंतु स्वरूपबोधकत्वेनानुवादकत्वमात्रत्वेवेति ध्येयम् ॥ अत एवान्यचेत्यादिप्रलापोपि निरस्तत्वादुपेक्षितः ॥ अयमेवार्थष्टीकाकृता भर्तृसूक्तानुवादकमुखेन प्रपंचितो यन्मायालीलानित्यलीला च तत्र वर्णितेति ॥ नच तत्र विशेषवाचकः शब्दो नास्तीति वाच्यम् ॥ भर्तृदेवादिपदानां "म्रियमाणो बिभर्ता" इत्यादिवाचकस्य च सत्वात् सर्वभर्तृत्वमीश्वर एव । यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वर इति भगवदुक्तेः ॥ किंच स एव सर्वरूपतया कार्यरूपेण म्रियमाण एव बिभर्ति । अत एव तत्र हेतुरुक्तः "एको देवो बहुधा सन्निविष्ट" इति । अयमप्यन्यासाधारणो हेतुर्विशेषवाचकः । अधुना भूभारराजपृतनेत्याद्युक्तमर्थमुत्तरार्द्धे नाह-यदा भारां दृयते संभर्तुं निधाय भारं पुनरस्तमेनीति । अस्यार्थः-भूभारराजपृतनामायिकयादवकुला-

दिरूप भर्तुं यदा त द्रयते आलस्य करोति तदा भार पूर्वोक्त निधाय पनिक्षिप्य पुनरस्तमेति स्वस्थान प्राप्नोतीत्यर्थ ॥ यथा सूर्य स्थानान्तरमेति तथा ॥ एवमग्रेपि "सद्योजातमुत जहात्येप उतो जरत न जहात्येक उतो बहूनेकमहर्जहार अतद्रो देव सदमेत मार्थ" इति अनेनापि मन्त्रेण सद्योजातमायिक जहातीत्युक्तम् ॥ एक जरत न जहातीति चोक्तम् । एव च स्पष्टतया श्रीकृष्णलीलाप्रतिपादकशास्त्राणि दृष्ट्वापि विशेषबाधक शब्दो नास्तीति प्रलपन्नुपेक्षणीय एव ॥ श्रीकृष्णपरत्वेपि न नोद्वेप इत्यादिकथन नास्तिकस्य प्रच्छन्न त्वसपादनाय ॥ यत्तु ( तमेव मृत्युममृत तमाहुरित्यत्र भक्ताभक्तज्ञानभेदेन प्रकार परत्वकथन निर्मूलम् । किंतु प्रमाद वै वयमिति सनत्सुजातीयवाक्यप्रामाण्येन प्रमाद मोक्षस्वरूपत्वमेव ब्रह्मण उक्त सर्वात्मकत्वा ) दिति तदप्यविचारितरमणीयम् । ब्रह्मण सर्वात्मकत्वे भूभार त द्रयत इत्यादिनोक्तालस्यप्राप्तिरूपत्राभक्ताभरणरूपत्वेपि क्षत्य भावात् तदर्थत्यागे बीजाभावात् "सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग् ज्ञानेन ब्रह्मचर्येण नित्य" मित्यादिश्रुतिप्रामाण्यात् । तादृशटीकोक्तार्थस्य समूलत्वेन त त्यक्त्वा मायिकमरणस्येत्यादिकथन स्वकपोलकल्पित तस्य हेयम् ॥ इत्यष्टचत्वारिंशत्खण्डखण्डना भासस्याभासत्वप्रदर्शनम् ॥ अत्र तत्र मोहस्येत्यादेरेकोनपचाशत्खण्डखण्डनाभासस्या भासत्व प्रदर्श्यते ॥ श्रुत्युक्तेत्यादिश्लोकचतुष्टयस्यायमभिप्राय ॥ अनेकग्रन्थेपु मोहनि वारकेषु सत्स्वपि असुराणा कथ न मोहनिवृत्तिरिति शकाया तेषा तम प्रकृतित्वादि त्युत्तर तम प्रकृतीनामपि कदाचित्सत्सगादिवशात्तामसभावनिवृत्ति सभाव्येतातस्तन्मोहस्य दार्ढ्यं हेत्वतरमुक्त श्रुत्युक्तेति । तथा चेश्वरेच्छैव तादृशीति बोधित—कपिरपि च कापि शायनमदमत्तो वृश्चिकेन सदष्ट ॥ अपि च पिशाचग्रस्त किं ब्रूमो वैकृत तस्येति न्यायश्च सूचित । एव च तन्मोहो दुरुच्छेद ॥ अत एव तस्य नित्यत्वमुक्तम् । नित्यत्व मपि चिरकालावस्थायित्वेन उपायासाध्यत्वेन च "अक्षय्य ह वै चातुर्मास्ययाजिन" इत्यादिवत् ॥ अत एव सत्स्वपि तेषामन्यथाभाव ॥ न च ग्रन्थवैयर्थ्य भक्तानामपि तत्सगा दन्यथाभावो न स्यादित्यर्थतत्सार्थक्यात् । एतेन ( मोहस्य मायाजन्यत्वेन नित्यत्वोक्ति विरुद्धे ) त्यादिदूषण निरस्तम् । गालिप्रदान तु शिष्टगर्हितमित्यसकृदुक्तमेवातस्तदीय प्रलाप उपेक्षित ॥ यत्तु ( मा भवत्विति प्रयोगो माङि लुङीति सूत्रेण आङ्माङोश्चेति सूत्रभाष्येण च विरुद्ध इति शब्देन्दुशेखराद्विज्ञेय ) ति प्रलपित तत्तुच्छम् । तादृश प्रयोगस्य शब्देन्दुशेखरादेव साधुत्वनिश्चयात् । नहि तत्र माङुपपदम् । किंतु निषेधार्थको माशब्द । अत एव मास्त्वित्यादौ निषेधार्थो माशब्दो न माङिति न दोष इति शब्द दुशेखरे निरूपितम् ॥ अत एव आङ्माङोश्चेति सूत्रभाष्ये माङो विशिष्टग्रहण किमर्थं प्रतिषेधार्थकत्यादिना विशिष्टस्यैव विचार कृत । तथा च भाष्यशेखराद्यज्ञानमूलक एवाय प्रलाप ॥ भगवद्भक्तिप्रतिपादकेषु वाक्येष्वन्यथाभान तु निजदोषप्राबल्यादेव । तत्र तत्रेश्वरेच्छाधा एव हेतुत्वम् । अत एवाशनतुल्यत्व स्वभावस्याशक्यपरिहारत्वात् । उक्त च—यदि स्याच्छीतलो वह्निश्चद्रमा दहनात्मक ॥ स्वभावस्तर्हि मर्त्याना शक्यते कर्तु मन्यथा ॥ इति । निजदोषावृतमनसामतिसुदरमेव भाति विपरीतम् ॥ पश्यति पित्तोपहत

शशिशुभ्रं शंखमपि पीतमिति चेति ॥ तस्माद्युक्तमेवेदमस्य कुलीनस्येदं वचनम् ॥ पूर्वमपि नेदृशविलापेन लीलाया अनित्यत्वम् । किंतु नित्यत्वमेव । एवं प्रपंचस्यापि सत्यत्वमेव कारणात्मना लीलायास्तु स्वरूपेणैवेति विशेषः ॥ न च प्रपंचस्य मिथ्यात्वं वक्तुं शक्यं पूर्वोक्तदूषणप्रसरात् । त्वदुक्तं तु पूर्वमात्र एव खंडितम् । किं पुनः पिष्टपेषणेन । ननु प्रपंचस्य कारणात्मना सत्यत्वं न वक्तुं शक्यम् । कारणस्य भावरूपत्वात्कार्यस्य च भावाभावरूपत्वादिति चेन्मैवम् ॥ कारणस्यापि भावाभावोभयात्मकत्वाद्ब्रह्मणोपि भावनायोग्यत्वरूपाभावरूपत्वात् ॥ अत एवोक्तं—नैष भावयितुं शक्य. केनचित्पुरुषोत्तमः ॥ अतो भावं यदंत्येन नाशयन्नाशेन उच्यते ॥ इति ॥ एवं चाभावस्याधिकरणात्मकत्वादभावरूपत्वमपि ब्रह्मणो निराबाधमेव ॥ एतेन महोपनिषद्व्याख्यानीत्यारभ्य प्रसिद्धाभावरूपत्वाभावादित्यादिकं निरस्तम् ॥ किंच प्रसिद्धाभावरूपत्वाभावादिति वदता प्रसिद्धाभावत्वं किमभिमतं यद्ब्रह्मणि नास्तीत्युक्तं भावभिन्नत्वमिति चेद्भावत्वस्य द्रव्यादिषट्कान्योन्याभाववद्भिन्नत्वरूपस्याभावघटितत्वेन भिन्नत्वस्य च भावनिरूपणाधीननिरूपणत्वेनात्माश्रयान्योन्याश्रयादिप्रसंगात् । न चास्तीति प्रतीतिविषयत्वं भावत्वं भिन्नत्वघटकभेदत्वं चाखंडोपाधिरिति वाच्यम् ॥ अभावोस्तीति प्रतीतिविषयत्वेनाभावस्यापि भावत्वप्रसंगात् ॥ न च समवायसामानाधिकरण्यान्यतरसंबंधेन सत्तावत्त्वं भावत्वमिति नातिप्रसंग इति वाच्यम् ॥ अभावस्यापि स्वरूपघटितसामानाधिकरण्यसंबंधेन सत्तावत्त्वाद्भावत्वापत्तेः ॥ न च समवायसंबंधेन तदधिकरणे समवायसंबंधेन वृत्तित्वरूपमेव सामानाधिकरण्यं विवक्षितमभावस्य च सामानाधिकरण्यघटकसमवायेनावृत्तित्वान्नानुपपत्तिरिति वाच्यम् ॥ समवाये व्याख्याप्रत्तेस्तस्य समवायेनावृत्तित्वात्तदंगीकर्तृभिन्नस्यैकस्यैव स्वीकारात् । समवायानंगीकर्तॄणां मध्वानां मते च तादृशलक्षणस्यैवासंभवात् ॥ अन्यथा "समवायाभ्युपगमाच्च साम्यादनवस्थितेः" इति सूत्रविरोधापत्तेः ॥ न च भावत्वमखंडोपाधिस्तदवच्छिन्नभेद एवाभावत्वमिति वाच्यम् ॥ अभावत्वमखंडोपाधिस्तदवच्छिन्नभेद एव भावत्वमित्येव कुतो न स्याद्विनिगमकस्य दुर्लभत्वात् । अखंडोपाधेरनिरूपणाच्च ॥ एतेन भावत्वमभावत्वमुभयमेवाखंडोपाधिरित्यपि निरस्तम् ॥ किंचाखंडं सच्चिदानंदमवाङ्मनसगोचरमित्यादौ ब्रह्मणोप्यखंडत्वं स्वीकुर्वता तत्त्वमस्यादिवाक्यानामखंडार्थत्वानुरोधेन चाखंडोपाधिरूपभावत्वमप्यंगीकृतमेवेति प्रसिद्धाभावरूपत्वाभावादित्यसंगतम् ॥ किंचाभावस्याधिकरणात्मकत्वं स्वीकुर्वता प्रसिद्धाभावस्यापि ब्रह्मनिष्ठस्य ब्रह्मात्मकत्वं स्वीकृतमेवेति कृतं वाग्जालेन ॥ यदपि जगतो ब्रह्मात्मकत्व इत्युपक्रम्य प्रत्युक्तमित्युक्त्वा (शुक्तिरजतयदधिष्ठानाभेदेन ब्रह्मरूपत्वेपि मिथ्यात्वानपायेनाविर्भावादिविषयस्य भ्रमस्याकिंचित्करत्वा)दित्युक्तं तन्न किंचित् । सत्यमिथ्यात्वयोरधिष्ठानकल्पितयोरभेदस्यासंभवेन दृष्टांतासंभवेन दार्ष्टान्तिकासिद्धेरन्यथा सत्यस्यापि मिथ्यात्वस्य मिथ्याभूतस्य सत्यत्वस्य च प्रसंगात् । तस्मात्तयोरभेदो न संभवतीति जगतो ब्रह्मात्मकत्वं घटादीनां मृदात्मकत्ववदेवावसेयम् ॥ यथा च षड्भावविकारप्रतीतीनामाविर्भावतिरोभावविषयकत्वमेव टीकोक्तरीत्या सिद्धमित्यवधेयम् ॥ यत्तु घटोत्पाद्युक्त्या जायत इति प्रतीतीनां

प्रादुर्भावविषयकत्व धात्वर्थानवगमादित्यादिना दूषित तत्तुच्छम् । जनी प्रादुर्भाव इत्यादिना प्रतिपादित धात्वर्थं परित्यज्यापूर्वार्थकल्पने मानाभावात् । कर्मांगेषु जायत इत्यादिप्रतीतेरिष्टापत्तिपराहतत्वात् ॥ "यथोर्णनाभि सृजते गृह्णते च" इत्यादिदृष्टान्तेन सत्कार्यवादस्य दृढीकृतत्वेन सत्कार्यवादयुक्त्यो निरस्ता इत्यमगतमेव ॥ असत उत्पत्तिश्च "कथमसत सज्जायत" इत्यादिना दूषितैव ॥ यच्च तेना(स्वसमवेतोत्पत्तिवाचक एव प्रादुर्भावशब्द ) इति प्रलपित तत्र स प्रष्टव्य । का स्वसमवेतोत्पत्ति । आद्यक्षणमयध इति चेत्तर्हि क्षण आद्यत्व स्वाधिकरणसमयध्वसानधिकरणत्वे सति स्वाधिकरणत्व रूपमुच्यते चेत्तादृशविशिष्टसमयमयधस्य स्वस्मिन्स्वीकार आत्माश्रय स्वाधिकरणसमयध्वसनाधिकरणसमयस्यघमंस्य लक्षणत्वसभवे स्वाधिकरणत्वाशवैयर्थ्य च ध्वसस्योत्पत्तिमद्भावरूपतयोत्पत्तिघटितत्वेनान्योन्याश्रयादि ॥ प्रागभावप्रतियोग्यभावरूपत्वे प्रागभावानगीकारे लक्षणासिद्धिश्चेति ॥ किंच जगत उत्पत्तिनाशास्वीकारे–तदेतदक्षर नित्य जगन्मुनिवराखिलम् ॥ आविर्भावतिरोभावजन्मनाशविकल्पवदिति विष्णुपुराण वाक्यविरोध । तत्र जन्मनाशयोराविर्भावतिरोभावभिन्नत्वस्योक्तत्वात् । अन्यथाऽक्षरत्वनित्यत्वयोरनुपपत्ति ॥ किंचोत्पत्तिस्वीकार आतपाभावलोको वा पटो वर्णपूरित इत्यादि विद्यारण्यवाक्यविरोधोपि न ह्यातपेन घटादय उत्पाद्यते । किंतु तेन तेषा दर्शनयोग्यत्वलक्षण आविर्भाव सपद्यते । तस्मादाविर्भावतिरोभावावेव जगतो न स्वसमवेतोत्पत्तिनाशाविति । अस्तीति प्रतीतिर्जन्मोत्तरस्थितिविषयेत्यपि रिक्त वच । प्रादुर्भावातिरिक्तजन्मनोऽसभवात्तस्मादाविर्भावयुक्तपदार्थविषयैव सा प्रतीति ॥ यदपि यच्च तत्रैवेत्यादिना व्यावहारिक प्रपच स्वापेक्षयोत्कृष्टसत्ताकप्रपचपूर्वक मायिकत्वेनाभिमतत्वान्मायिकरजाद्वा स्वप्नप्रपचवदिति टीकोक्तमनूद्य तन्न युक्तमित्युक्त्वा ( त्वन्मते जगतो नित्यतयोत्कृष्टसत्ताकजगदतरासमते बाधितत्वाच्च स्वरूपासिद्धेश्च तर्काभावेन व्याप्त्यसिद्धेश्चे ) त्याद्युक्त तदपि टीकाकृदभिप्रायाज्ञानादेव । नहि टीकाकृता व्यावहारिक प्रपचपदेन त्वदभिमतो व्यावहारिक प्रपचो विवक्षित । किंत्वासुरमोहनार्थं यो भगवता मायया दर्शित प्रपञ्च स एव पक्षतया विवक्षितोऽन्यथा ब्रह्मण अवस्थाविशेषस्य ब्रह्मात्मकप्रपचस्य मायिकत्वासभवेन मायिकत्वकथन विरुद्ध स्यात् ॥ अत एव ब्रह्मरूप एव प्रपचे भगवता माययाऽविद्यमाने यत् प्रत्याय्यते तदतरा सृष्टिरूपत्वान्मायामनोमयमिति पूर्वं टीकाकृता प्रतिपादितम् ॥ एव च तादृशपक्षे मायिकत्वेनाभिमतरूपहेतो सत्वान्न स्वरूपासिद्धिर्नापि बाधलत्य पारमार्थिकप्रपचे भगवतो दर्शितत्वात्तत्पूर्वकत्वस्य तस्मिन्नव्याहतत्वात् ॥ भ्रम प्रत्यधिष्ठानविधया सत्यस्यैव सस्काराधायकत्वेनापि सत्यस्य हेतुत्वमुपेयमन्यथा भ्रममूलकभ्रम इव कल्पिताधिष्ठानेपि क्वचिद्भ्रमसम्भवेनाधिष्ठानविधयापि सत्यस्य हेतुत्व न स्यात् ॥ भ्रमधाराकल्पने प्रमाणाभावेन भ्रममूलभूतभ्रमेपि सत्यस्य हेतुत्वानपायाच्च ॥ तत्तद्भ्रम प्रत्यपि सत्यस्य स्वजन्मसस्कारसबधेन नियतपूर्ववर्तित्वेन भ्रमत्वावच्छिन्न प्रति पूर्ववर्तित्वसत्वेन व्यभिचारानवकाशात् ॥ पूर्ववर्तित्वस्य स्वव्यापारसबधेन विवक्षणाच्च । न व्यभिचारगधोपि । तथा च तादृशानुमानेन जगत

अत्यन्तमेव सिद्धम् ॥ जगन्मिथ्यात्वबोधकानुमानं तु पूर्वमेव निरस्तम् ॥ एवं प्रमाणपुरःसरमुक्तेपि येषां विपरीतैव मतिरुत्पद्यते तत्र तेषां पापबाहुल्यमेव हेतुः ॥ अत एवोक्तं-एवं शास्त्राण्यसंतुष्टाः केचित् कुत इतीर्यताम् ॥ चार्वाकादेः प्रत्यक्षमात्रप्रमाणवादिनः पापवादीभ्यासाद्येवासिद्धाः ॥ असंतुष्टास्तु शास्त्रार्थं न स्वर्गं तद ॥ सम्यग्विचारो नास्त्यस्य धीदोषादिति चेत्तदा ॥ इति च ॥ यदपि यथेत्यादिना कदाचनेति ॥ ज्ञात्वापि पापबाहुल्यादसंतोषो यथा तव । इति च ॥ यदपि यथेत्यादिना टीकायामित्युपक्रममनूद्य तन्न युक्तमित्युक्त्वा ( महाकौर्मवाक्यस्य सति प्रक्षिप्तत्वाभावनिश्चये महोपनिषन्मात्रघटकशून्यशब्दार्थवर्णनपरत्वा ) दिति प्रलापः तदप्यज्ञानादेव । महोपनिषदि एष ह्येव शुच्छ इत्यादिना ब्रह्मणः शून्यतुच्छादिशब्दप्रतिपाद्यत्वमुक्तम् ॥ तस्माच्छून्यतुच्छशब्दानामेवार्थो महाकौर्मे–शमूनं कुरुते विष्णुरद्वयः सन् परः स्वयम् ॥ तस्माच्छून्यमिति प्रोक्तस्तोदनात्तुच्छ उच्यते ॥ इत्यादिना विवृतस्तादृशविवरणं महोपनिषद्घटकशून्यादिपदानामेवेत्यत्र नियामकमनुक्त्वा स्वप्रज्ञयैव नियमकरणं साहसिकानामेव शोभते न तु विदुषाम् ॥ शमूनमिति त्वभिप्रायवर्णनं न तु विग्रहः । एतेन ( शमो मकारलोपस्य यकारागमस्य कल्पने गौरवा ) दिति परास्तम् ॥ तादृशार्थे मानं तु महाकूर्मवाक्यं प्रदर्शितम् । तेन मानं दृष्ट्वापि मानाभावं वदन्नुपेक्ष्यः ॥ किंच यावद्विशेषशून्यमिति त्वदभिप्रेतार्थेपि किं प्रमाणमिति वक्तव्यं प्राकृतधर्मशून्यमित्येव कुतो न स्यात् ॥ न च शून्यपदस्यान्यपदासहकृतस्य यावद्विशेषाभावबोधकत्वमिति युक्तम् ॥ शून्यागारे श्मशाने चेत्यादि वाक्ये यावद्विशेषशून्यत्वस्यागारे बाधितत्वेन तादृशवाक्यस्याप्रामाण्यापत्तेः । शून्यमेवेति चेत्तर्हि नाम तादृग्विभाति हीत्यादावपि नाम्नो यावद्विशेषशून्यत्वस्य त्वन्मतेऽभावेनासंगतिश्च स्यात् ॥ 'न शून्यं नापि सद्यादृक् तादृक् तत्त्वमिहेष्यताम्' इत्याद्युक्तरीत्या ब्रह्मणोपि यावद्विशेषशून्यत्वं च न स्यात् ॥ तस्माच्छून्यपदार्थस्य नानार्थत्वमभ्युपेयम् । ब्रह्मणि वर्तमानस्य तत्पदस्य शमूनमित्यादिनोक्तार्थकत्वमेव नियामकं च प्रकरणादिकं तस्यैव नानार्थस्थलेऽभिधानियामकत्वात् ॥ एतेन मानाभावादित्यादिकं प्रत्युक्तम् ॥ किंचेत्यादिना शं विशेषज्ञानजन्यसुख ऊनं कारणीभूतज्ञानविषयांशेऽल्पम् । अर्थाद्विशेषरहित शुच्छ इत्युक्तं तत्प्रामादिकं स्वमतविरुद्धत्वात् । नहि त्वन्मते विशेषज्ञानस्य सुखं प्रति हेतुत्वम् । तथात्वे सदसुखानुत्पत्तेरैन्द्रियकसुखं प्रति तु विषयेन्द्रियसंबंधस्यैव हेतुत्वं गौरवं च तादृशार्थे स्यात् ॥ किंच ऊनपदे न्यूनत्वबोधकत्वं न स्वभावबोधकत्वं न्यूनत्वं चास्मन्मते घटते । भगवता स्वलीलासुखेनान्यसुखस्यापीकरणात् ॥ नहि टीकारसाम्यादमधुपानामन्यदैन्द्रियिकादिसुखं रोचत इति । एवमेव तुच्छत्वमपि ब्रह्मणि तोदनार्थकं स एव माययाच्छन्नसुदति ॥ यदपि यथेत्यादिना टीकारद्गुणमनूद्य तदपि न युक्तमित्युक्त्वा ( मायां तु प्रकृतिं विद्यादित्यादिश्रुत्यतरेकार्थ्येन जनकत्वस्वरूपस्यैव व्यंजकत्वस्य तत्र विवक्षितत्वा ) दित्यूचे तदपि न किंचित् । आरंभवादे जनकत्वव्यंजकत्वयोर्भेदेपि विवर्तवादे विशेषाभावात् । प्रत्युत प्रातीतिकानां व्यक्तिरेवोचिता । आद्यक्षणसंबंधादिरूपोत्पत्तेरसंभवात् । व्यक्तिश्च प्रतीतिः । सा च प्रातीतिकस्य तत्कालेऽस्तीति न दोषः । अन्यदित्यसंभवात् । व्यक्तिश्च प्रतीतिः । सा च प्रातीतिकस्य तत्कालेऽस्तीति न दोषः । मिथ्यासत्ययोरभेदासंभवाद्वेत्यादावपि वस्तुतोऽन्यत्वाभावोपि त्वन्मते न संभवति ।

न्यथा सत्यस्य मिथ्यात्वप्रसंगादित्यादिना पूर्वं बहुशो दूषितत्वात् ॥ यत्तु जगदंत पाति-भगवद्भजनादिकं तु तत्र मिथ्यात्वस्वीकारेपि नास्मामिर्दूष्यत इति प्रलपितं तन्मंदम्। उपासनाश्रितो धर्मो ज्ञाते ब्रह्मणि वर्तते ॥ प्रागुत्पत्तेरज सर्वं तेनासौ कृपणः स्मृतः ॥ इत्यादिना दूषितत्वात्। किंच जगति मिथ्यात्वोपगमे तन्मध्यपातिभगवन्मूर्त्यादौ मिथ्यात्वबुध्द्यापादने कथं न तद्दूषितम्। नहि शुक्तिरजतं मिथ्येति जानतस्तत्र प्रवृत्तिः संभवति। तथा च भगवद्भजनादौ मिथ्यात्वज्ञापने तन्मूलांदावपि तथात्वज्ञानम्। तत्र प्रवृत्त्यभावो लोकानां सपादित इत्यादि ॥ जैमिन्यादिभिः कर्मोपदेष्टृभिः कर्मणि लोकाः प्रवर्तिता न तु कर्म त्याजितम्। त्वया तु कर्मोपासने उभे त्याजित इत्याधिक्यमिति ॥ एतेन ( मिथ्यात्वज्ञानस्य भजनेद्वेषाप्रयोजकत्वा )दिति निरस्तम् ॥ मिथ्यात्वज्ञानस्य श्रद्धानाशकत्वे भजनप्रतिबंधकत्वाच्च ॥ अर्चायामेव हरये पूजां य श्रद्धयेहते ॥ न तद्भक्तेषु मान्येषु स भक्त प्राकृत स्मृतः ॥ इत्यादिभागवतादिवाक्यान्मूर्तिसेविनां प्राकृत-वैष्णवत्वं यदुक्त तत्रोपष्टंभकत्वेन यस्यात्मबुद्धिरित्यादिवाक्यं च यदुपन्यस्तं तदप्य-ज्ञानात्। नहि मूर्तिसेविनां प्राकृतवैष्णवत्वं तत्राभिमतम्। किंतु भगवद्भक्तासेविरवे सति मूर्तिमात्रसेविनां भगवद्भजन भगवद्भक्तसेवापूर्वकं कार्यमिति तस्याभिप्राय ॥ एवं च तादृशाभिप्रायमबुद्ध्वा शंकराचार्याणामभिप्रायं चाबुद्ध्वा मूर्तिसेवाखंडनपराणि वचन-मनुपादेयमेवेति ॥ *इत्येकोनपंचाशत्खंडखंडनाभासस्याभासत्वप्रदर्शनम्* ॥ अथ तत्र श्रुतिविरुद्धपद्धतेरित्यादेः पचाशत्खंडखडनाभासस्याभासत्वं प्रदर्श्यते ॥ तत्रेत्यादिना गालिप्रदान पुन पुनस्तेन कृत तच्च तादृशस्योचितमेव कुलीनत्वात् परास्तत्वाच्च ॥ लोके युक्त्यनभिज्ञा परास्ता गालिप्रदान कुर्वंत्यतस्तत्र मौनमेवोत्तरम् ॥ अत एव खंड-नकृद्भिरक्त मूकतैवात्र विजयायेति ॥ न चाप्रतिभैवं प्रसज्येत। उत्तरस्याप्रतिपत्तिरुत्तरा-ईस्येति तल्लक्षणविशेषणादिति ॥ देवद्विषामित्यादिभागवतश्लोकेनासुरप्रकृत्यर्थं भगवता बौद्धाना प्रस्थानं कृतमित्युक्तम्। एवं च भगवन्मायामोहिततया शिष्टगर्हिताचरण तेन कृतम्। विप्ररूपाणीत्यादिश्लोकानामप्यर्थास्तस्यान्यपरा एव भांति ॥ अत एव दोषदूषित-हृदयतयान्यपरो भातीत्युक्तम्। तेनैव प्रक्षिप्तत्व यदि तादृशश्लोकानामङ्गीकरोषि तदान्येषा तवाभिमताना न प्रक्षिप्तत्वमित्यत्रापि किं प्रमाणमिति वक्तव्यम् ॥ अन्यार्थकत्वं क्लिष्टत्वा-दुपेक्ष्यम् ॥ ब्राह्मणैरूपयति निरूपयतीत्यर्थे ण्यंताणि चिणि णौ तृतीयेत्यादिप्रलापोपि क्लिष्ट-त्वादुपेक्ष्य। अन्यत्र ब्राह्मणरूपिणेत्यादिपदस्य तादृशार्थादर्शनाच्च ॥ न कर्मधारयान्म-त्वर्थीयेत्यत्र कर्मधारयपदस्य तत्पुरुषमात्रपरत्वमिति यदुक्तं तत्तुच्छम्। "अरूपवदेव हि तत्प्रधानत्वा"दिति सूत्रविरोधात्तत्र त्वत्समतेर्थे रूपाभावस्य ब्रह्मणि बोधात् ॥ एवमग्रेपि क्लिष्टकल्पनया स्वनिंदापरवाक्यस्यान्यनिंदापरत्वेन योजयितुस्तत्र तत्र शर्मालाभेनान्य-व्याख्यान यद्देत्यादिना दर्शयत प्रलापो नादरणीय ॥ एवं चेर्ष्यादूषितहृदयेन शुद्धा-द्वैतमार्तंडे ये दोषाभासा समुद्भावितास्ते सर्वे श्रुतिस्मृतिविरुद्धा ॥ एव विद्वन्मंडनेपि ये समुद्भावितास्तेपि श्रुतिस्मृतिविरुद्धत्वादस्माभिर्दृढं खंडितत्वाच्च निरस्ता ॥ आद्राद्रं इति प्रयोगे तु पूर्वमेवोक्तम् ॥ वाङ्मन कायैरिति प्रयोगस्य शुद्धत्वकथन तु कौमुदी-

विस्मृतिं द्योतयति । अचतुरविचतुरेति सूत्रे कौमुदीकारेण वाङ्मनस इत्युदाहृतम् ॥ अक्षिभ्रुवमिति चोदाहृतम् ॥ यदि वाङ्मनसोः प्राण्यंगत्वं विवक्षितं स्यात्तदाक्षिभ्रुवमूर्ध-ग्रीवमित्यादिवन्वाङ्मनसमित्येवोदाहरेत् ॥ तस्मात्तयोः प्राण्यंगत्वं नास्तीति समाहारा-विवक्षायां बहुवचनेन बाधकम् ॥ एवं च शास्त्राज्ञानमूलकं खंडनाद्यनुपादेयमेव ॥ 'भावावबोधविहितो न दुनोति दोष' इत्युक्तेरिति संक्षेपः ॥

मायानिर्मितमेघपाटलपटुर्यज्ञस्य विध्वंसनो
मिथ्याभस्करियेशकल्पितसहस्राक्षं समुत्फालयन् ॥
शुद्धाद्वैतदिवाकरं विमलयन् चिन्मण्डनं मंडयन्
मोदं वल्लभवंशजेषु जनयन्प्राभञ्जनो राजते ॥
शुक्लशुक्लप्रतिपदि भानुसूनोर्दिनेऽभवत् ॥
ग्रन्थः पूर्णोऽब्धिवन्ह्यंकभूमिते वत्सरे शुभे ॥
मथुराधीशपादाब्जे ग्रंथो ह्येषो मयार्पितः ॥
प्रीयतां तेन देवेशः शरणागतवत्सलः ॥

॥ इति श्रीप्रभंजने वज्रविस्तारभंगो नाम द्वितीयो भागः ॥

॥ समाप्तश्चायं ग्रंथः ॥